॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला
२८७

# वेदाङ्गेतिहासः

## ( *A HISTORY OF VEDANGAS* )

( शिक्षा-कल्प-व्याकरण-निरुक्त-छन्द-ज्योतिष-वेदाङ्गानि )

लेखक

**डॉ० नरेश झा**

साहित्याचार्य, साहित्यरत्न, काव्यतीर्थ, विद्यावारिधि
प्राप्तावकाश प्रधानाचार्य
आदर्श रानी चन्द्रावती श्यामा महाविद्यालय, वाराणसी



**चौखम्बा सुरभारती प्रकाशन**

वाराणसी

प्रकाशक

चौखम्बा सुरभारती प्रकाशन

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : ३३३४३१



प्रथम संस्करण १९९७ ई०

मूल्य ६०-००

अन्य प्राप्तिस्थान

चौखम्बा संस्कृत प्रतिष्ठान

३८ यू. ए., बंगलो रोड, जवाहरनगर

पो० बा० नं० २११३

दिल्ली ११०००७

दूरभाष : २३६३९१

*

प्रधान वितरक

चौखम्बा विद्याभवन

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ३२०४०४

मुद्रक

फूल प्रिण्टर्स

वाराणसी

## शुभाशंसा

'वेदाङ्गेतिहासः' पुस्तकमिदं विहङ्गमदृशा मयाऽवलोकितम्। पुस्तकेऽस्मिन् वेदाङ्गस्य व्युत्पत्तिः, महत्त्वम्, प्रयोजनम्, शिक्षादिषड्विधवेदाङ्गानि च सम्यग्वर्णितानि सन्ति। 'वेदोऽखिलो धर्ममूलमिति' भणितिर्वेदस्य धर्ममूलत्वमभिव्यनक्ति। वेदो हि न केवलं धर्मस्य, प्रत्युत भारतीयायाः संस्कृतेरपि मूलमिति सर्वैरेव विद्वद्भिर्मुक्तकण्ठेन स्वीक्रियते। ज्ञानराशिर्वेदार्थावबोधाय वेदाङ्गानां जनिरभूत्। शिक्षा, कल्पः, व्याकरणम्, निरुक्तं, छन्दः ज्योतिषञ्चेति षड्वेदाङ्गानि प्रथितानि सन्ति। तथाहि—

शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसांचयः।
ज्योतिषामयनं चैव वेदाङ्गानि षडेव तु॥

वेदार्थज्ञानेऽत्यन्तोपयोगीनि वेदाङ्गानि कोमलमतीनाञ्छात्राणां सुखबोधाय देववाण्यामवर्णयत् डॉ० नरेशझा महोदयः। डॉ० झा महोदयस्येमां सरलप्राञ्जलशैलीनिबद्धां कृतिं निभाल्य नितरां मोदते मे मनः।

ग्रन्थस्यास्य साफल्यं कामयमानोऽहं डॉ० नरेशझा महोदयं स्वीयाशीर्वचोभिः संयोजयामीति शम्।

**बलदेव उपाध्यायः**

# पुरोवाक्

अयि ! मान्याः सुरभारतीसमुपासकाः गुणैकपक्षपातिनो विद्वांसः ! सुविदितमस्ति तत्र भवतां भवतां यन्मानवजीवनस्य चरमं लक्ष्यमस्ति धर्मार्थ-काममोक्षाख्यपुरुषार्थचतुष्टयस्य सम्प्राप्तिः । एतेषां प्राप्त्यै एव मानवा आजीवनं प्रयत्नशीलास्तिष्ठन्ति । तेषां पुरुषार्थचतुष्टयानां प्राप्तिश्च वेद-वेदाङ्गादि-शास्त्राणामध्ययनेनैव भवति । तथा चोक्तम्—'निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च' । एवञ्च—

विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ।।

सेयं साधनिका विद्या चतुर्दशसंख्यका, किंवा—अष्टादशसंख्यकाः भवति । आसु विद्यासु चत्वारो वेदास्तेषां षडङ्गानि च ( शिक्षा, कल्पः, व्याकरणं, निरुक्तं, छन्दः, ज्योतिषञ्च ) मुख्यानि सन्ति । षडङ्गैर्विना वेदस्य वेदानां वा सम्यक्तयाऽध्ययनमसंभवमिति वेदाङ्गस्याध्ययनं परमावश्यकं भवति । अपि च यत्र तत्र विभिन्न-विश्वविद्यालयेषु, पाठचक्रमे वेदाङ्गेतिहासोऽपि निर्धारितो विद्यते । अन्यच्च पृथग्-पृथगङ्गानां शिक्षादीनामितिहासग्रन्थाः हिन्दीभाषायां बाहुल्येन, संस्कृतभाषायाञ्चाल्पीयस्या संख्यया क्वचित्क्वाचिदेवो-लभ्यन्ते । एतत्काठिन्यमवलोक्य च्छात्राणां सौविध्यायेतिहासलेखनाय चौखम्बा सुरभारती प्रकाशनान्यतम-अध्यक्षेण ( व्यवस्थापकेन ) श्रीमता नवनीतदास-गुप्तेन प्रस्तावितोऽहमेतस्मिन् कर्मणि संलग्न आसम् । इतिहासस्य विषय-गाम्भीर्येण, दुरूहतया, मदीयास्वस्थतया चास्मिन् कार्ये महान् बिलम्बो जातः । अस्मिन् दुरूहे कठिने च कार्यसम्पादने येषां ग्रन्थानां मया सदुपयोगः कृतस्त-ल्लेखकानां सम्पादकानाञ्च विनतभावेन सश्रद्धमाभारमहं विभर्मि । तेषु मत्परमगुरवः पद्मविभूषणपदाङ्किताः आचार्य-बलदेव-उपाध्यायाः प्रमुखाः सन्ति, येषामकम्पानुकम्पया शुभाशिषा च प्रेरितोऽस्मि । अन्ये चादरणीयाः पण्डितराजाः आचार्यरामप्रसादत्रिपाठिनः, आचार्य पं० युधिष्ठिरमीमांसकाः, आचार्यरामचन्द्रमिश्रमहानुभावाः, पं० रमाकान्तमिश्राः, डॉ० ब्रह्मानन्दत्रिपाठि-नश्चैतादृशाः सन्ति, येषां कृतीनां बाहुल्येन सदुपयोगो मया कृतः ।

अतः सर्वेषां ज्ञाताज्ञातविदुषां येषां कृतिभिरुपकृतोऽस्मि, तान् प्रति श्रद्धाभावं प्रकटयामि ।

अपरञ्च—चौखम्बा सुरभारती व्यवस्थापकेभ्यः साधुवादं ददामि, यैर्मह्यम् अवसरोऽयं प्रदत्तः ।

अस्मिन्नवसरे मच्छिष्यकल्पाः डॉ० गुञ्जेश्वरचौधरी महानुभावाः शुभाशीर्वादान् लभन्तां यैः समये समये मह्यं सहयोगः प्रदत्तः ।

मानवजन्य-सुलभदोषादज्ञानात् कण्टकजन्यदोषाद्वा त्रुटयः संभाव्यन्ते । ताश्च श्रीमद्भिः कृपालुभिर्विद्वद्भिः क्षन्तव्या इति ।

पर्यन्ते—यद्यनेन कृतकार्येण छात्राणां मनागप्यध्ययने साहाय्यं भवेत्तदा मदीयैषः परिश्रमः सार्थको भविष्यतीति मन्ये । यतो ह्येतत् कार्यं तेभ्य एव कृतम्, विद्वांसस्तु स्वयमेव पाण्डित्यशीलाः, नीरक्षीरविवेकिनः शास्त्रावगाहन-शेमुषी-सम्पन्नास्तिष्ठन्ति । अथापि मन्निवेदनमस्ति—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्तु ते किमपि तान् प्रति नैष यत्नः ।
यत्नस्त्वयं मम कृतोऽल्पधियां बुधानां
वेदाङ्गपाटव-समुत्सुक-सज्जनानाम् ॥

श्यामा-छात्रावास
नीलकण्ठ, वाराणसी
वैशाखकृष्णपञ्चम्यां सोमे २०५३ वैक्रमे
दिनांकाः ८।४।९६ ई०

विद्वद्वशंवदः-
**डॉ० नरेश झा**

# विषयानुक्रमणिका



## शिक्षा

**( शिक्षा घ्राणं तु वेदस्य )**

## सामान्या लौकिकी शिक्षा



## कल्पः

( हस्तौ कल्पोऽथ पठ्यते )

## कृष्णयजुर्वेदीय-गृह्यसूत्राणि



## सामवेदीयकल्पसूत्राणि

## व्याकरणम्

### ( मुखं व्याकरणं स्मृतम् )

## निरुक्तम्

**( निरुक्तं श्रोत्रमुच्यते )**



## छन्दः

**( छन्दः पादौ तु वेदस्य )**



## ज्यौतिषम्

**( ज्यौतिषामयनं चक्षुः )**

---

# भूमिका

## वेदाङ्गस्य व्युत्पत्तिस्तन्महत्त्वञ्च

महनीयेऽस्मिन् जगतीतले पुरुषार्थचतुष्टयस्य साधको मानवो भवति। मानवानां देहे यथा हस्तपादादयो विविधान्यङ्गानि भवन्ति तद्वत् धर्मार्थकाममोक्षाख्यचतुर्विध-पुरुषार्थस्य प्रतिपादका वेदास्सन्ति। वेदा अपि अङ्गैरेव व्याक्रियन्ते। अत एव चतुर्दश-विद्यास्वङ्गानां चर्चा विद्यते।

अङ्गशब्दस्य व्युत्पत्तिलभ्योऽर्थो भवति उपकारक[1] इति, तद्यथा—''अङ्ग्यन्ते ज्ञायन्ते अमीभिरिति अङ्गानि''। अत्रायमाशयः—यैरुपकरणैः कस्यापि वस्तुनः स्वरूपपरिज्ञाने साहाय्यं प्राप्नोति तान्यङ्गानि भवन्ति। वेदः स्वयमेव दुर्बोधः दुरूहश्च विषयः—भाषा-भावयोर्द्वयोरपि दृष्टचा। निष्कर्षश्चात्रायं विद्यते यद्—वेदार्थज्ञाने तत्कर्मकाण्डस्य च प्रतिपादने, तथाविधसाहाय्यप्रदाने च सक्षमं सार्थकञ्च यच्छास्त्रं तमेव विद्वांसो 'वेदाङ्ग' इति नाम्ना कथयन्ति व्यवहरन्ति च। तथा च वेदस्य वेदार्थस्य च यथार्थज्ञानाय शिक्षादि षड्विषयान् सम्यगध्ययनस्य नितान्तं प्रयोजनं विद्यते।

वेदमन्त्राणां समुचितरूपेणोच्चारणं प्रथमः कल्पः। अत एव शाब्दिकमन्त्राणां यथार्थरूपेणोच्चारणस्थापने प्रमुखं महत्त्वं दीयते। एतदर्थं प्रवर्तमाना व्यवह्रियमाणा च पद्धतिः—वेदाङ्गस्य 'शिक्षा' इति कथ्यते। वेदस्य मुख्यं प्रयोजनं वैदिकं कर्म-काण्डम्, यज्ञयागादेः यथार्थमनुष्ठानमस्ति। एतत्प्रयोजनाय प्रवृत्तमङ्गं 'कल्प' इति कथ्यते। अस्य व्युत्पत्तिलभ्योऽर्थो भवति—यज्ञ-यागस्य प्रयोगाणां समर्थकं शास्त्र-मिति। तद्यथा—कल्प्यते समर्थ्यते यागप्रयोगोऽत्र इति कल्पः।

व्याकरणस्य वेदाङ्गत्वप्रयोजनं यथा—पदानां प्रकृतेः प्रत्ययस्य च विवरणं प्रदाय पदस्वरूपं परिचाययति—अर्थविश्लेषणञ्च करोति। अस्मै प्रयोजनाय व्याकरण-शास्त्रस्योपयोगित्वात् तस्मिन्नपि शास्त्रे वेदाङ्गत्वं विद्यते।

निरुक्तस्य कार्यमस्ति—पदानां निरुक्तिकथनं व्युत्पत्तिप्रदर्शनञ्च। निरुक्तेर्विभिन्न-त्वात् अर्थेऽपि भिन्नता भवति। अतो वेदस्यार्थनिरुक्तस्य वेदाङ्गता सिद्धचति। अपि च वेदः छन्दोमय्यां वाण्यां विद्यते, तत्परिचयं विना कथं वेदार्थावगमो भवेत्। प्राप्ते परिचये सत्येव मन्त्राणामुच्चारणस्य पाठस्य च सम्यग् ज्ञानं भविष्यति।

---

१. तथा चाह काव्यप्रकाशे साहित्यदर्पणे च—

'उपकुर्वन्ति तं सन्तो [ न्तं ] येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः' ॥ ( काव्य० )
'शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्' ॥ ( सा० १०।१ )

उदाहरणमुखेन जानन्ति भवन्तः। तद्यथा—वरुणविषये शुनःशेपऋषेः बहुचर्चितोऽयं मन्त्रः—

निषसाद धृतव्रतो वरुणः पस्त्यास्वा। साम्राज्याय सुक्रतुः[1]।

अस्मिन् मन्त्रे त्रिपदा गायत्री छन्दोऽस्ति, यस्य प्रत्येकस्मिन् पादे अष्टावष्टाक्षराणि भवन्ति, छन्दसः एतद् विज्ञापनं मन्त्राणामुच्चारणाय अत्यावश्यकमस्ति। द्वितीये तृतीये च पादे आपाततः सप्तैवाक्षराणि सन्ति। अतः एनमष्टपदा विरचनाय 'पस्त्याश्वा' इत्यस्योच्चारणं चतुरक्षरसमन्वितं भाव्यम्। तद्यथा—'पस्त्या–सुआ' 'साम्राज्य' इत्यस्याप्युच्चारणे पूर्वोक्तपद्धत्या 'साम्राजि आय' इति भविष्यति। अनेनैव प्रकारेण छन्दसः ज्ञानं मन्त्राणामुच्चारणायातीवावश्यकं भवति। छन्दसो वेदाङ्गतायामेतदेव कारणमस्ति।

ज्यौतिषशास्त्रं प्रत्यक्षमस्ति। तथा चोक्तं—"प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणाविति"। एतच्छास्त्रं यज्ञ-यागस्य समुचितसमयस्य निर्देशं करोति।

श्रौतयागस्यानुष्ठानं विशिष्टर्तौ कस्मिन्नपि विशिष्टे नक्षत्रे च भाव्यम्। विवाहादि गृह्यकर्मणे नक्षत्रज्ञानं ज्यौतिषशास्त्रादेव वयं लभामहे। अपरञ्च दीक्षाया विधानं कर्मकाण्डस्य महत्त्वपूर्णो विषयः। अस्मिन् विषये कतिपयोदाहरणानि प्रस्तूयन्ते। यथा—

तैत्तिरीयब्राह्मणस्य (१।१।२।१) कथनमस्ति यत्—'कृत्तिकास्वग्निमादधीत', फाल्गुनीपूर्णिमायां दीक्षायाः विधानमस्ति। कथनस्याभिप्रायोऽयमस्ति यत्—कर्मकाण्डीये प्रत्येकस्मिन् विधाने–नक्षत्रस्य, तिथेः, मासस्य संवत्सरस्य च ज्ञानमावश्यकं कर्त्तव्यकोटिकञ्च भवति। एभिरुपर्युक्तैः कारणैर्ज्यौतिषशास्त्रस्य वेदाङ्गत्वं सिद्ध्यति।

अत्र सङ्क्षेपेणैतत्कथनं समुचितं प्रतिभाति यत्—मन्त्राणां यथोचितोच्चारणाय शिक्षायाः, कर्मकाण्डीय-यज्ञीययोरनुष्ठानाय विधिना कल्पस्य, शब्दस्वरूपव्युत्पत्त्यादीनां ज्ञानाय व्याकरणस्य, समुचितार्थज्ञानाय शब्दानां स्फोटनपूर्वकं निर्वचनानिरुक्त्यै—निरुक्तस्य, वैदिकछन्दसां सम्यग् ज्ञानाय छन्दसः, विविधानुष्ठानानां कालज्ञानाय ज्योतिषस्य, एतेषामङ्गानां यथार्थरूपेणोपयोगित्वात् 'वेदाङ्ग' इति कथयन्ति सार्वदेशिकपण्डिताः।

## वेदाङ्गसाहित्यस्य प्रयोजनम्

वेदोऽस्माकं भारतीयानां धर्मस्याधारभूतः स्तम्भः। अतः सामाजिकाः जनाः एनमतिशयेनादरेण, सम्मानेन पावनेन दृष्ट्या चावलोकयन्ति। एतस्य महन्महत्त्वं को न विजानाति। यदा तर्ककुशलाः नैयायिका अनुमानादीनामपि साहाय्येन न किमपि कर्तुं पारयन्ति यागादिना स्वर्गप्राप्तिविषये, तदा तेषां वेद एव शरणं भवति। तथा चोक्तम्—

---

१. ऋग्वेद० १।५।१०।

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता' ॥

अस्यैतादृशी विपुला प्रतिष्ठा तदुदयकालानन्तरमेव समस्ते विश्वे प्रसृता बभूव । वेदस्यैकमप्यक्षरं पूतं ज्ञानवर्द्धकञ्च मन्यते । तत्र परिवर्तनं स्वरूपतश्च्युतिर्वा महतेऽपकाराय मन्यते स्म । एतादृश्यामवस्थायां वेदस्वरूपसंरक्षणायैव वेदाङ्गस्योदयो बभूव । ऋते वेदाङ्गात् शब्दानामर्थानाञ्च संरक्षणमसम्भवमेवास्ति । अस्य सहयोगिनः साहित्यस्योदयः समुत्पत्तिर्वा—उपनिषत्काले एव सञ्जाता । अस्मिन् विषये मुण्डकोपनिषदेव प्रमाणम् । अवलोकयन्तु वेदविद्विद्वांसः[1]—

'शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति । तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति' ।

अपरञ्च—अपरा विद्यायां वेदचतुष्टयानन्तरं तेषां षडङ्गानां शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दो-ज्योतिषादीनां गणना विद्यते । एषु प्रत्येकस्य विपुलं वैशिष्टयं विद्यत इति न तिरोहितमस्ति विद्वन्मण्डले । अत एतेषामुपयोगिता सुतरामेव सिद्धा भवति । अस्य महतीमुपयोगितामवलोक्य महर्षिणा पाणिनिना पतञ्जलिना च स्वपाणिनीयशिक्षायां महाभाष्ये पस्पशाह्निके च सत्यमेवोक्तं यत्—

'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते' ॥

( पा० शि० ४१–४२ )

'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' ।

( पस्पशाह्निके )

इत्येताभ्यां सूच्यते यद् ब्रह्मलोकस्य प्राप्तिः षडङ्गानामध्ययनेनैव भवतीति पारलौकिकी स्थितिः, लोके तु सर्वविदितमेव महत्त्वम् । अतः कारणेन विनाप्यध्ययनस्यास्यैव वेदाङ्गस्य महनीयता वर्तते न त्वन्येषां लौकिकशास्त्राणाम् । एतेन वेदाङ्गस्य लौकिकी पारलौकिकी च स्थितिः सुस्पष्टा भवति ।

## षड् वेदाङ्गानि कुत्र कुत्र वर्णितानि सन्ति ?

वेदाङ्गेषु व्याकरणं प्रमुखमस्ति । अस्य विवेचनं नारदपुराणस्य पूर्वभागस्य द्वितीयपादस्यैकपञ्चाशत्तमेऽध्याये संक्षेपतया रमणीयतया चाभूत् । नारदपुराणस्य व्याकरणं कातन्त्रव्याकरणस्य सारभूतमस्ति, यं माहेश्वरमथवा कौमारं व्याकरणं कथयन्ति विद्वज्जनाः । अपि चाग्निपुराणस्य ३४९तमादध्यायात् ३५९तम-अध्याय-

१. मुण्डकोपनिषद् ( १।१।३–५ ) ।

पर्यन्तं दशाधिकेष्वध्यायेषु व्याकरणशास्त्रस्य वर्णनं विद्यते। छन्दःशास्त्रस्याथवा पिङ्गलशास्त्रस्य वर्णनं गरुडपुराणस्य २०७तम-अध्यायात् २१२तमाध्यायपर्यन्तं, नारदपुराणस्य पूर्वभागस्य द्वितीयपादस्य सप्तपञ्चाशत्तमेऽध्याये वैदिकानां लौकिकानां च छन्दसां वर्णनमस्ति। अनेनैव प्रकारेण—अग्निपुराणस्य ३२८तमाध्यायात् ३३५-तमाध्यायपर्यन्तं छन्दःशास्त्रस्य विशदं निरूपणं प्राप्यते। ज्यौतिषशास्त्रस्याध्ययनाय नारदपुराणस्य विष्णुधर्मोत्तरस्य च विवेचनमतीव महत्त्वपूर्णमस्ति। नारदपुराणस्य त्रिष्वध्यायेषु (१।२।५४–५६) त्रिस्कन्धज्योतिषस्य (सिद्धान्तस्य संहितायाः होरायाश्च) कमनीयं निरूपणमस्ति—यत् नारदीयं ज्यौतिषमिति नाम्ना विख्यात-मस्ति। निरुक्तसम्बन्धिताः सामग्र्यः पुराणेषु अत्यल्पाः सन्ति। नारदपुराणस्य पूर्वभागस्य द्वितीयपादस्य त्रिपञ्चाशत्तमेऽध्याये निरुक्तसम्बद्धाः कतिपयश्लोकाः प्राप्यन्ते, ये मुख्यतया व्याकरणशास्त्रस्य स्वरवैदिकप्रक्रियातो धातुप्रकरणाच्चाभिन्नाः प्रतीयन्ते।

वेदादीनां पाठविधानस्य, स्वराणामुच्चारणविधेः, सामवेदस्य गान-प्रक्रियायाः वर्णानां स्पष्टोच्चारणस्य विधिर्यस्मिन् शास्त्रे वर्णिताः स्युः तच्छास्त्रं 'शिक्षाशास्त्रम्' कथ्यते। अस्य वर्णनं नारदपुराणस्य पूर्वभागस्य द्वितीयपादस्य पञ्चाशत्तमेऽध्याये प्रायः शतत्रयश्लोकेषु तथा चाग्निपुराणस्य ३३६तमेऽध्याये विद्यते। कल्पानां वर्णनन्तु प्रायः पुराणेषु विद्यमानं विद्यते। कल्पे वैदिकानां लौकिकानाञ्च कर्मकाण्डानां समन्व-योऽस्ति, येषु श्रौतसूत्र-गृह्यसूत्र-स्मार्तसूत्र-शुल्वसूत्राणि चेमानि चत्वारि गृहीतानि भवन्ति। एषां वर्णनं भविष्यपुराणे सर्वाधिकमस्ति। येषु यज्ञस्य, इष्टापूर्तेः, संस्का-रस्य च विधयो वर्णिताः सन्ति। तद्यथा च कल्पानां पञ्चभेदाः भवन्ति। तद्यथा—(१) नक्षत्रकल्पः, (२) वैतानकल्पः, (३) संहिताविधानकल्पः, (४) आङ्गि-रसकल्पः, (५) शान्तिकल्पश्चेति। तत्र नक्षत्रकल्पे—यज्ञ-संस्कारादीनां कर्मणां मुहूर्तानाञ्च निर्णयो भवति। वैतानकल्पे यज्ञानां (हविर्यज्ञ-सोमयज्ञ-पाकयज्ञानाम्) साङ्गोपाङ्गविधिर्निरूपिता विद्यते। संहिताकल्पे—विशेषतो वेदनिर्दिष्टानामश्वमेध-राजसूयादियज्ञानां तद्भिन्नानाञ्चापि सर्वविधीनां सम्पादनप्रक्रिया प्राप्ता भवति। आङ्गिरसकल्पे शत्रुराष्ट्रेभ्यो मारणस्य, मोहनस्य, वशीकरणस्य उच्चाटनादि अभि-चारकर्मणाञ्च निर्देशोऽस्ति। शान्तिकल्पे—दैव-अन्तरिक्ष-अद्भुतादि उत्पातानामीति-भीत्यादिभयानां निवारणस्य, एवञ्च शत्रुराष्ट्रैः कृत-मारणमोहनादिप्रयोगाणां शान्तिविधीनां वर्णनं विद्यते। इमे सर्वेऽपि विषयाः पुराणेषु विशेषतो भविष्ये, अग्नि-पुराणे विष्णुधर्मोत्तरे च विस्तरेण प्राप्ता भवन्ति।

# शिक्षा

## ( शिक्षा घ्राणं तु वेदस्य )

### [ शिक्ष् भाव अ + टाप् = आ = शिक्षा ]

वेदानां प्राणभूतेषु वेदाङ्गेषु शिक्षायाः प्राथमिकमेकं महत्त्वपूर्णं विशिष्टञ्च स्थानमस्ति। शिक्षेयं वेद-पुरुषस्य घ्राणमिति कथिताऽस्ति ( शिक्षा घ्राणं तु वेदस्य )। येन प्रकारेण पुरुषः सर्वेषामङ्गानां यथाविधि विनिवेशितेऽपि मुखसौन्दर्यादिभिः परिपुष्टेऽपि घ्राणेन विना चमत्कृतिं न दधाति, गर्हणीयतामेव भजते तथैव वेद-पुरुषस्य स्वरूपं वेदाङ्गेन शिक्षारूपघ्राणेन विना नितान्तमशोभनं विकृताकारं वा परिलक्ष्यते।

शिक्षाया व्युत्पत्तिलभ्यमर्थं व्युत्पादयन् वेदभाष्यकाराः सायणाचार्याः कथयन्ति यत्—'स्वरवर्णाद्युच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते सा शिक्षा' इति। एतेनेद-मायातं यत्—वेदाङ्गेषु तच्छास्त्रं शिक्षा नाम येन ऋग्वेदादि वेदमन्त्राणामविकलं यथास्थित्युच्चारणं विशुद्धञ्च स्यादिति। अस्मात्कारणादेव सुविज्ञा विद्वांसः कथयन्ति यत्—शिक्षाशास्त्रमिदं वेदाङ्गमिति।

शिक्षासङ्ग्रहप्रस्तावनायामाचार्यपादैः श्रीमद्भिः रामप्रसादत्रिपाठिभिरुक्तं यत्—"'शिक्षयति या सा शिक्षा', 'शक्तुं शक्तो भवितुमिच्छा शिक्षा' इति द्वे व्युत्पत्ती शिक्षा-शब्दस्य प्रदर्शिते। शब्दोऽयं योगरूढः। शिक्षयति या सा शिक्षा इति योगशक्तेरेव आश्रयणे यस्य कस्यापि विषयस्य शिक्षको ग्रन्थः शिक्षाशब्देन व्यवह्रियते"। इति।

अस्य महनीयस्य शिक्षाशास्त्रस्य प्रयोजनमुक्तमस्ति तैत्तिरीयोपनिषदि यथा—'अथ शिक्षां व्याख्यास्यामः—वर्णः, स्वरः, मात्रा, बलम्, साम, सन्तान इत्युक्तः शिक्षाध्यायः'। तत्र वर्ण इति पदेनाकारादेः ग्रहणम्, 'स्वर' इत्यनेन उदात्तादेः, मात्रया ह्रस्व-दीर्घ-प्लुतानां, बलेन स्थानप्रयत्नौ गृह्येते, साम्ना निषादादिः, सन्तानेन विकर्षणादिः'। इति शिक्षा-प्रयोजनम्। अस्य विश्लेषणञ्च यथा—वेदाध्यय-नस्य स्थिरा प्राचीना च प्रणाली इयमस्ति यत्—आदौ गुरुः ( शिक्षकः ) कस्यापि मन्त्रस्योच्चारणं स्वरविज्ञानसहितं स्वयमेव करोति पश्चाच्च तदुच्चारणं सावधान-तया शिष्यः श्रुत्वा अवधारणञ्च कृत्वा तदनुसरणं करोति। अत एव वेदस्यैकं नाम विद्यतेऽनुश्रवः, अर्थात्—'अनु पश्चात् श्रूयते यः स अनुश्रवः' इत्येव कारणमस्ति यत्—लिपिबद्धस्य प्रकाशितस्य ग्रन्थस्याधारमाधृत्याध्येता पाठकः निन्दायाः पात्रतां समुपयाति। यतो हि भगवतः पाणिनेः शिक्षायामेतादृशः पाठकः पाठकाधम इत्युक्तः। तथा हि—

'गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः'॥

एवमेव वेदस्य तथाविध्युच्चारणाय स्वर-ज्ञानस्यातीवापेक्षा भवति। त्रयः स्वरा भवन्ति—उदात्तानुदात्तस्वरितभेदैः। उच्चस्वरेणोच्चरितत्वात् उदात्तः, मन्दस्वरेणोच्चरितत्वात् अनुदातः, द्वयोश्च समाहारेणोच्चरितत्वात् स्वरित इति सूत्राणि निर्दिश्य पाणिनिना प्रोक्तम्।

प्रायोवादो दृश्यते यत्—वेदस्य प्रत्येकस्मिन् शब्दे उदात्तस्वरोऽवश्यमेव भविष्यति, शेषाः स्वराश्चानुदात्ता भवन्ति।

अपि चैभ्योऽनुदात्तेभ्यः कश्चिदप्यनुदात्तः स्वरो विशेषावस्थासु स्वरितरूपे परिवर्तितो भवति। स्वरविज्ञानशास्त्रस्यैतदनुशीलनं वेदातिरिक्तमन्यत्र न क्वाप्युपलभ्यते।

वेदे स्वरप्राधान्यस्य मुख्यं कारणमस्त्यर्थनियमनम्। अत्रायमाशयः—शब्दस्यैकत्वे सम्भवेऽपि स्वरभेदात्तस्यार्थभेदो जायते। स्वरे एकला सामान्याऽपि त्रुटिर्यदि जायते तदाऽर्थान्तरमनर्थो वा जायते। एतादृशी त्रुटिरक्षम्या भवति। अत एव यज्ञस्य विधिपूर्वकनिर्वाहः समेषां कृते कठिनो व्यापारः। अस्मिन् विषये—एका सुप्राचीना आख्यायिका पूर्वत एव प्रचलिताऽस्ति। तदित्थम्—पुरा वृत्रासुरेण स्वरिपोरिन्द्रस्य सर्वतोमूलेन विनाशाय बृहद्यज्ञस्यैकस्यायोजनं कृतम्। श्रूयते तस्मिन् यज्ञे ऋत्विजामपि संख्या पर्याप्ताऽऽसीत्। होमस्य मुख्यो मन्त्र आसीत्—'इन्द्रशत्रुर्वर्धस्व' यस्यार्थोऽस्ति यत्—इन्द्रस्य शत्रुः घातकः विजयं प्राप्नुयात्। अनेन प्रकारेण 'इन्द्रशत्रुः' इत्यस्मिन् शब्दे 'इन्द्रस्य शत्रुः' इत्थं षष्ठीतत्पुरुषसमासोऽभिप्रेत आसीत्। अयमर्थस्तदैव सिद्धो भविष्यति यदा 'इन्द्रशत्रुः' अन्तोदात्तो भवेत्। परञ्च ऋत्विजामतर्कितभावादन्तोदात्तस्य स्थाने आद्युदात्तस्य (इन्द्रशब्दे 'इ' इत्युपरि) उच्चारणं विहितम्। अनेन स्वरपरिवर्तनेनायं शब्दः तत्पुरुषसमासात् बहुव्रीहिः सञ्जातः। फलस्वरूपमस्यार्थः सञ्जातः—'इन्द्रः शत्रुः यस्य'—इन्द्रो यस्य घातकोऽस्ति। अनेन प्रकारेण यजमानाय विपरीतमेव सिद्धम्। अत एव पाणिनीयशिक्षायां स्पष्टमुद्घोषितं पाणिनिना महावैयाकरणेन—

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्'॥

एतदेव कारणमस्ति यत् प्राचीने वैदिके काले गुरवो वेदमन्त्राणां समुचितोच्चारणविषये सावधानाः सतर्काश्चासन्। तथैवेयं परम्परा निष्णातवैदिकेष्वद्यापि तेनैव प्रकारेणाव्याहतगतिना क्वचिदंशेन क्वचित्पूर्णेन च समागच्छति।

अत्रेदमैतिहचं सुप्रसिद्धमस्ति यत्—महाभाष्यकारेण पतञ्जलिना तद्वैदिकाचार्यस्य गुरोरुल्लेखो महताऽऽदरेण कृतो यो हि—उदात्तस्वरस्य स्थानेऽनुदात्तस्वरस्योच्चारयितुः शिष्यस्य मुखे चपेटिकां दत्वा शुद्धोच्चारणं कारयति स्म। तद्यथा—

'उदात्तस्य स्थाने अनुदात्तं ब्रूते खण्डिकोपाध्यायः तस्मै शिष्याय चपेटिकां ददाति' इति।

एतस्मात्कारणादेव 'शिक्षा' वेदाङ्गेषु प्रथमेति चर्चिता। अत्रैतदपि ध्यातव्यं

यत्—प्रत्येकस्य वेदस्योच्चारणार्थं स्वीया शिक्षा विद्यते। यस्यां शिक्षायां तत्तद् वेदानुकूलमुच्चारणविधानं विद्यते।

## वेदाङ्गेषु प्रातिशाख्यम्

प्रातिशाख्यस्य स्थानं वेदाङ्गेषु महत्त्वपूर्णमस्ति, यतो हि—अस्य प्रसक्तिः शिक्षा-छन्दो-व्याकरणेषु त्रिषु वेदाङ्गेषु प्रसरति। शिक्षायाः, छन्दसः, व्याकरणस्य च प्रभावो लौकिके क्षेत्रे त्वस्त्येव—किञ्च वैदिके क्षेत्रेऽपि—उपर्युक्तप्रयोजनसिद्धचर्थं भवति। एतत् प्रयोजनमुद्दिश्य उव्वटकृते ऋक्प्रातिशाख्ये प्राप्यते। तत्रोक्तं यत्—

'शिक्षाछन्दोव्याकरणैः सामान्येनोक्तलक्षणम्।
तदेवमिह शाखायामिति शास्त्रप्रयोजनम्'॥

अत्रेदं तात्पर्यमस्ति यत्—शिक्षा, छन्दः व्याकरणञ्च सामान्यनियमानां वर्णनं करोति। त एव नियमास्तद्वैदिकी-शाखायां कथं सन्त्येतदेव प्रतिपादनं प्रातिशाख्यस्य मुख्यं प्रयोजनमस्ति।

अत्रायं निष्कर्षः—'प्रातिशाख्यम्' व्याकरणस्यैको ग्रन्थः, यस्मिन् स्वरसन्धेस्तथान्यवर्णपरिवर्तनानां नियमानामुल्लेखो वर्तते। ये नियमा वेदस्य कस्यामपि शाखायां प्राप्यन्ते, येषु च स्वराघातसहितोच्चारणपद्धतिर्निर्दिष्टा विद्यते।

अपरञ्च 'प्रातिशाख्यम्' वेदस्य लाक्षणिको ग्रन्थः, येन वेदस्य बाह्यस्वरूपं निर्दिष्टं भवति।

वेदाभ्यासः पञ्चधा भवति। तद्यथा—अध्ययनम्, विचारः, अभ्यासः, जपः अध्यापनञ्च। एतदेव स्मारयति महाकवेः श्रीहर्षस्येयमुक्तिः—"अधीतिबोधाचरणप्रचारणैर्दिशा चतस्रः प्रणयन्नुपाधिभिः"। अस्मिन् पद्ये जपस्याभावो दृश्यते। अस्तु।

उपर्युक्तानां पञ्चानामध्ययनादीनां ऋक्प्रातिशाख्यसूत्रेषु यथाविधिवर्णनमुपलभ्यते।

एषु अध्ययनन्तु वेदश्रवणस्य द्योतकमस्ति। विचारादयो मननपक्षस्य द्योतकाः सन्ति। विचारश्च द्वेधा प्रवर्तते—अर्थतः लक्षणतश्च।

अस्य महन्माहात्म्यं प्रकटयतो निरुक्तकारस्य यास्कस्य समीचीनेयमुक्तिरस्मानुद्बोधयति, तद्यथा—

'स्थायुरयं भारहरः किलाभूत् अधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा'॥

अत्रायमाशयः—यो हि वैदिको वेदमधीत्य तदर्थं न विजानाति स उपहासास्पदो भारवाही स्थाणुरिव, शुष्कवृक्ष इव वृषभ इव वा भवति। यो हि पद-पदार्थं विजानाति, स एव समस्तं श्रेयस्त्वं प्राप्नोति। लोके परलोके च यशस्वी भवति।

निष्कर्षश्चायमत्र—प्रातिशाख्यस्य परिधिः पूर्वोक्तानि त्रीणि वेदाङ्गानि स्वस्मिन् समायोजयति, तथा च तद्विशिष्टशाखायां सम्भावितानां विशेषनियमानां विवरणं प्रस्तौति। महर्षिणा पाणिनिना स्वरवैदिके—'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' (६।

३।१३३ ) इत्यस्मिन् सूत्रे ऋक्क्षु, तु, नु, घ, मक्षु, तङ्, कुत्र, उरुष्य इत्येतेषां पदानां व्यञ्जने परभागे स्थिते दीर्घविधानं कृतमस्ति । अयन्तु सामान्यो नियमः परञ्च ऋक्-प्रातिशाख्यस्य विधानानुसारमस्यां शाखायां दीर्घविधानं सर्वस्मिन् काले न भवति, शब्दा ह्रस्वभावे एव तिष्ठन्ति । फलतः 'आ तू न इन्द्र मघवन्' ( ऋक्० ४।३२।१ ) इत्यस्मिन् यत्र 'तु' इत्यस्य दीर्घभावस्तत्रैवान्यत्र तत्तु प्रयः प्रलया ते" इत्यस्मिन् दीर्घ-स्याभावो दृश्यते । अनेनैव प्रकारेण शिक्षायाः छन्दसश्च नियमानां विषये ज्ञातव्यः । इति विधानानुसारं प्रातिशाख्यमेतेषां त्रयाणां वेदाङ्गानां नियमानां विशेषरूपेण सञ्चालनं करोति । अपरः पक्षश्चास्ति यत्—प्रातिशाख्यस्य सर्वतन्त्रस्वतन्त्रा सत्ताऽस्तीति । शिक्षायां छन्दसि व्याकरणे च येषां नियमानां विधानं कृतमस्ति तद्भिन्ननियमानां विधानमस्मिन् प्रातिशाख्ये शास्त्रे विद्यते । एतादृशा विषयाः सन्ति—क्रमः, क्रम-हेतुः, पारायणादयश्च । प्रातिशाख्यं कस्यापि शास्त्रस्याङ्गं स्वीकृते—अस्य पूर्णतायाः ह्रासो भवति । परञ्चास्ति तच्छास्त्रमनिन्द्यमार्षं पूर्णं वेदाङ्गं यत् स्वसत्तायै कस्यापि शास्त्रस्यापेक्षां न करोति ।

प्राचीने भारते संस्कृतभाषाया व्याकरणमेभ्यः प्रातिशाख्येभ्यः प्रारभ्यते । प्रातिशाख्यस्य शास्त्रेषु स्वतन्त्रा सत्ता विद्यते । प्रातिशाख्यग्रन्थेषु व्याकरणसमर्थिता-नामनेकानां विषयाणां प्रतिपादनमस्ति । अपि चैषु ग्रन्थेषु प्राचीनानां वैयाकरणानां नामान्युपलभ्यन्ते । वैदिके काले व्याकरणशास्त्रस्याभ्युदयस्य पर्याप्तं सूचकमिदं प्राति-शाख्यं शास्त्रम् ।

महर्षिणा शौनकेन ऋक्प्रातिशाख्ये एतादृशाः सूक्ष्मातिसूक्ष्मा नियमा निर्दिष्टाः, यद्बलेन वयं कथयितुं समर्थाः स्मः यत्—ऋग्वेदस्य मूलपाठे अद्यापि विकृते काले न कापि क्षतिरवलोक्यते । एतत् प्रातिशाख्यस्यैव वैशिष्टचम् ।

**प्रातिशाख्यानां शिक्षा-धर्मिता**—अस्मिन् विषये शिक्षासंग्रहप्रस्तावनायामाचार्य-पादैस्त्रिपाठिभिरुक्तं यत्—वेदानां स्वरूपरक्षायां शिक्षा-व्याकरणादीनां यावन्महत्त्व-मस्ति न तत ईषदपि अल्पं प्रातिशाख्यानां महत्त्वम्, प्रत्युत अस्मिन् अंशे प्राति-शाख्यानि शिक्षा व्याकरणादिभ्यो विशेष्यन्ते एव, यद् व्याकरणादीनि प्रायो वेदे सामान्ये विषयकाणि प्रातिशाख्यानि तु शाखाविशेषमवलम्ब्यैव प्रवृत्तानि ।

## ऋक्प्रातिशाख्यम्

प्रातिशाख्यग्रन्थेषु ऋक्प्रातिशाख्यं प्राचीनतायाः प्रामाणिकतायाश्च विषये स्वमहत्त्वपूर्णं स्थानं निर्धारयति । परिषदि प्रचारितत्वात्—इदं प्रातिशाख्यं पार्षदं पारिषदं सूत्रं वेति नाम्ना प्रख्यातमस्ति । विष्णुमित्रेणास्य पार्षदस्य रचयिता शौनकः स्वीकृतः । प्रातिशाख्यमिदं शिक्षाविषयप्राधान्यात् शिक्षाशास्त्रमिति नाम्नाऽपि व्यवह्रियते ।

अस्मिन् प्रातिशाख्ये ऋग्वेदस्यैकमात्रोपलब्धायाः शाखायाः शैशिरीयोपशाखायाः साङ्गोपाङ्गं विवेचनमस्ति, तेनास्य रचयितुः शौनकस्य भाषाशास्त्रीयमध्ययनं प्रमाणितं भवति ।

## वाजसनेयि प्रातिशाख्यम्

मुनिना कात्यायनेन विरचितं शुक्लयजुर्वेदस्य प्रातिशाख्यं विद्यते। अयं कात्यायनोऽष्टाध्यायीवार्तिककाराद्भिन्नो वा--इत्यस्मिन् विषयेऽधुनापि मतवादः प्रचलति। अस्मिन् विषये आचार्यपादानामस्मद्परमगुरूणां श्रीमतां बलदेवोपाध्यायानां सुस्पष्टमतमस्ति यत्—इमे प्रातिशाख्यकर्तारः कात्यायना वार्तिकाराद्भिन्नाः सन्तीति नास्त्यत्र सन्देहावसरः, इमे तु महर्षेः पाणिनेरपि प्राचीनतराः सन्ति।

अस्मिन् प्रातिशाख्ये अष्टावध्याया गुम्फिताः सन्ति। येषु परिभाषा-स्वर-संस्काराणां त्रयाणां विषयाणां विस्तृतं सर्वाङ्गीणं विवेचनमस्ति।

तत्र प्रथमेऽध्याये—वर्णोत्पत्ति-अध्ययनविधि-संज्ञापरिभाषा-वर्णानामुच्चारणस्थानादीनां वर्णनं विद्यते।

द्वितीयेऽध्याये—स्वर-नियमाः।

तृतीयेऽध्याये—सन्धेर्नियमाः।

चतुर्थेऽध्याये—सन्धेः, पदपाठस्य क्रमपाठस्य चापेक्षिता नियमाः क्रमशः प्रतिपादिताः सन्ति।

पञ्चमेऽध्याये—अवग्रहनियमाः। समासे द्वयोः पदयोः पृथग् ग्रहणमवग्रह उच्यते, यो हि ह्रस्वस्य स्वरस्येवैकमात्रिको भवति।

षष्ठाध्याये—आख्यातस्योपसर्गस्य च नियमाः।

सप्तमेऽध्याये—परिग्रहस्य नियमाः। परिग्रहस्यार्थो भवति—मध्ये इति शब्दं स्थापयित्वा पदस्य पुनरावर्तनम्।

अष्टमेऽध्याये—वर्णसमाम्नायस्य विस्तृतं विवेचनम्। तत्र वर्णमाला—अध्ययनविधिः, वर्णानां देवता, पद-चतुष्टयन्तेषाञ्च गोत्र-देवतादीनां प्रख्यापनम्।

एभिरुपर्युक्तैर्विवरणैर्ज्ञायते यत्—वाजसनेयिप्रातिशाख्ये मुख्यरूपेण षण्णां विषयाणां विवेचनं प्रस्तुतमस्ति। यथा—(१) वर्णविचारः, (२) स्वरविचारः, (३) सन्धिविचारः, (४) पदपाठविचारः, (५) क्रमपाठविचारः, वेदाध्ययनविचारश्च।

भाषाविज्ञानदृष्टया—वाजसनेयिप्रातिशाख्यस्य महत्त्वपूर्णं वैशिष्टयं विद्यते। अस्मिन् मुनिना कात्यायनेन यत्प्रतिपादितं तत् विशदं, तलस्पर्शी—भाषाविज्ञानसमन्वितमस्ति। इमे महान्तः स्वविषयस्य विशेषज्ञा विशिष्टा विद्वांस आसन्। तैश्च स्वतुलनात्मिकया दृष्टया बहूनां प्राचीनाचार्याणां मतान्यालोच्य तन्निरूपणं कृतम्। कात्यायनप्रातिशाख्यस्य द्वे व्याख्ये प्रकाशिते स्तः। अनयोरेकं उव्वटकृतं मातृवेदसंज्ञकं भाष्यमपरञ्चानन्तभट्टविरचितं 'पदार्थप्रकाशक'नामकं भाष्यमिति। प्रतिज्ञासूत्रं भाषिकसूत्रञ्च स्वल्पकलेवरात्मकं सूत्रद्वयं कात्यायनप्रातिशाख्यस्य परिशिष्टरूपं ज्ञातव्यम्। तद्विवरणं यथा सङ्क्षेपेण—

प्रतिज्ञासूत्रे शुक्लयजुर्वेदस्य स्वरादिनियमानां विवरणमस्ति। अस्य सूत्रस्य व्याख्यातारः सन्ति—अनन्तदेवयाज्ञिकाः, ये खलु अनन्तदेवभट्टस्यैवापरं नाम इति प्रतीयते। अस्य व्याख्यायामुच्चारणस्य वर्णानां सम्बन्धस्य पारस्परिकस्य च विषये

नूतनं विज्ञापनं प्राप्यते। शुक्लयजुर्वेदे मूर्धन्यषकारस्योच्चारणं कवर्गीय'ख'सदृशं तथा च 'य'कारस्योच्चारणं चवर्गीय'ज'कारवत् भवति। परञ्च द्वयोरुच्चारणमेकाकारं नास्ति, प्रत्युत तत्सदृशमेव भवति। उच्चारणमिदं 'ष'-'ख'कारयोर्मध्यवर्ति—यकार-जकारयोश्च मध्यवर्त्तित्वं विशिष्टरूपेण भवति।

**भाषिकसूत्रे**—प्राधान्येन शतपथब्राह्मणस्य स्वरसञ्चारनियमानां विधानमस्ति। सहैव कतिपयानां सम्प्रत्यनुपलब्धानां ब्राह्मणग्रन्थानामपि स्वरसञ्चारस्य सङ्केतोपलभ्यते। वेदस्य स्वरविधानस्य विधिवद् ज्ञानायास्य ग्रन्थस्य विवरणं नितान्तमुपयुक्तं प्रामाणिकञ्च सेत्स्यति। अत्राप्यनन्तदेवस्य व्याख्योपलभ्यते।

## तैत्तिरीयं प्रातिशाख्यम्

तैत्तिरीय( शाखया )संहितया सम्बद्धमिदं प्रातिशाख्यं प्रश्नद्वये खण्डद्वये च विभक्तमस्ति। प्रत्येकस्मिन् प्रश्ने द्वादश अध्यायाः सन्ति। इत्थं सूत्रात्मकोऽयं ग्रन्थः चतुर्विंशत्यध्यायेषु विभक्तोऽस्ति। विषयाणां प्रतिपादनं सुव्यवस्थितं प्रामाणिकञ्च विद्यते।

तत्र प्रथमे प्रश्ने—वर्णसमाम्नायस्य, शब्दस्थानस्य शब्दोत्पत्तिप्रकारस्य, विविध-स्वर-विसर्गसन्धीनां, मूर्द्धन्यविधानादिविषयाणां सुस्पष्टं विवेचनमस्ति।

द्वितीये प्रश्ने—नकारस्य णत्वविधानस्य, अनुस्वारस्य—अनुनासिकस्य, अनुनासिकभेदस्य, स्वरितभेदस्य, संहिता-स्वरूपादेरनेकोपादेयविषयाणाञ्च प्रतिपादनमत्र विद्यते। स्वसंहितया सम्बद्धत्वात् सम्पूर्णान्युदाहरणानि तैत्तिरीयसंहितागतान्येव सन्ति।

अस्य भूयस्यो व्याख्यासम्पदः सन्ति। प्रकाशितासु तिसृषु व्याख्यासु माहिषेयकृतं 'पदक्रमसदन'नामकं भाष्यमतीव प्राचीनतमं विद्यते। यतो ह्यस्य द्वितीयेन व्याख्याकारेण 'सोमयार्य' इत्याख्येन स्वत्रिभाष्यरत्ने माहिषेय-आत्रेय-वररुचीनां प्राचीनानां व्याख्यानामुपयोगः कृतः। तासु व्याख्यासु—माहिषेयभाष्यमिदं सर्वप्रथमं स्थानं धारयति। तस्मिन् निर्दिष्टानि समस्तान्युद्धरणानि अत्रोपलभ्यन्ते। 'पदक्रमसदन' अन्वर्थकमिदं नाम।

वेदविदां मतेन वैदिकपाठस्य द्वौ भेदौ भवतः, प्रथमः प्रकृतपाठः द्वितीयश्च विकृतिपाठः। तत्र प्रथमे प्रकृतपाठे संहिता-पदक्रमपाठाश्च भवन्ति। तथा च शिखा-माला-घनाद्यष्ट विकृतिपाठा भवन्ति। एषु प्रातिशाख्यानां प्रतिपाद्यो विषयः प्रकृतिपाठस्तथा तत्सम्बद्धं स्वरसन्धिविवेचनं भवति। अनया दृष्टचा माहिषेव भाष्यस्य 'पदक्रमसदन' इति नाम सार्थकमस्ति। भाष्यमिदं संक्षिप्तं लघुकायमुपादेयञ्चास्ति। सोमयार्यस्य 'त्रिभाष्यरत्नम'स्मादर्वाचीनमस्ति। गोपालयज्वाविरचितं वैदिकाभरणन्तु अनयोर्द्वयोरपेक्षया रचनाकालदृष्टचा नवीनमस्ति। एतास्तिस्र व्याख्याः प्रामाणिकाः, प्रमेयबहुलाः, व्याकरणस्यान्तस्तत्त्वसमुद्घाटका नितरामुपयोगिन्यश्च विद्यन्ते।

## सामवेदीय प्रातिशाख्यम्

विद्वांसः समीक्षकाः कथयन्ति यत्—सामवेदस्यानेकानि प्रातिशाख्यानि प्रकाशितानि सन्ति, तेष्वेतानि मुख्यानि सन्ति। तद्विवरणञ्च यथा समासेन—

**( क ) पुष्पसूत्रम्** — ऋषिणा पुष्पेण प्रणीतत्वादिदं प्रातिशाख्यं पुष्पसूत्रमिति नाम्नाऽभिधीयते । अस्मिन् दश प्रपाठकाः सन्ति । अस्योपरि उपाध्यायस्याजातशत्रोः कृतं भाष्यं प्रकाशितमस्ति । प्रस्तुतमिदं प्रातिशाख्यं गानसंहितया सम्बन्धितमस्त्यत एवास्मिन् स्तोमस्य बहुलांशेन विवेचनमस्ति । अपि च तादृशानां स्थलविशेषाणां मन्त्राणाञ्चोल्लेखाः सन्ति, येषु स्तोभानां विधानमपवादो भवति । सङ्गीतोपयोगिसामग्रीणां सङ्कलनेन सूत्रमिदं नितरामुपयोगितां बिभर्ति । अस्मिंश्च मुख्यरूपेण वेयगाने अरण्ये गेयगाने च प्रयुक्तानां साम्नामूहनं मन्त्रेषु कथं केन वा रूपेण भवतीत्यस्य विशदं विवेचनमस्ति ।

हरदत्तरचितायाः सामवेदीयसर्वानुक्रमण्याः आधारमाधृत्य पुष्पसूत्रस्य फुल्लसूत्रस्य वा रचयिता सूत्रकारो वररुचिः । अस्य पुष्पसूत्रस्योपरि उपाध्यायस्याजातशत्रोर्नामकस्य कस्यापि ग्रन्थकारस्य व्याख्या उपलभ्यते ।

**( ख ) ऋक्तन्त्रम्**—पुस्तकमिदं सामवेदस्य कौथुमशाखायाः प्रातिशाख्यमस्ति । अस्मिंश्चान्यप्रातिशाख्येषु वर्ण्यविषयैस्सह एषां विषयाणामपि अतिशयेन साम्यमस्ति । ग्रन्थस्य पुष्पिकायामिदं 'ऋक्तन्त्रव्याकरणम्' इति नाम्ना निर्दिष्टमस्ति । अशीत्युत्तरद्विशतसूत्रेषु पञ्चप्रपाठकेष्वध्यायेषु वा विभक्तमिदं ऋक्तन्त्रम् । अस्य रचयितारः सन्ति सुप्रसिद्धा वैयाकरणाः शाकटायननामधेयाः । येषां निर्देशा यास्कस्य पाणिनेश्च ग्रन्थेषूपलभ्यते । अक्षरोदयज्ञानवैशिष्टचमत्र वर्णितमस्ति । तत्पश्चाच्च व्याकरणस्य विशिष्टानां पारिभाषिकशब्दानां लक्षणनिर्देशः प्राप्यते । वर्णाक्षराणामुच्चारणस्थाननिरूपणानन्तरं सन्धेर्विवरणं वैशद्येन प्रतिपादितमस्ति । पदान्ताक्षराणां विविधपरिवर्तनानां निरूपणं सन्धेः प्रसङ्गे महत्त्वाधायकमुपादेयञ्चास्ति । तदुदाहरणञ्च यथा—अन्तिमनकारस्य विसर्जनीये परिवर्तनं यथा—ऋतून् + अनु = ऋतुंरनु, रेफविशिष्टशब्दानां विसर्गस्य रेफे परिवर्तनम्—प्रातरग्नि, प्रातर्जुषस्व इत्यादौ । इत्थमत्र व्याकरणस्य गूढतथ्यानां विवेचनमुपलभ्यते ।

अतो निश्चीयते यदिदं प्रातिशाख्यं स्वमूलस्वरूपे पाणिनेः पूर्वमासीदिति । तस्मात् परिभाषाविधाने सूत्राणां रचनायाञ्च यद्यष्टाध्याय्यामेतस्य विपुलः प्रभावो दृश्यते तदा नात्राश्चर्यस्य किमपि कारणमवशिष्टमस्ति । यास्केनापि एतस्य विशिष्टमतानां निर्देशो विहितः स्वमहनीये ग्रन्थे ।

ऋक्तन्त्रव्याकरणस्य रचयितुर्विषये मतद्वयं विद्वन्मण्डले विराजते । तत्र प्रथमे पक्षे शाकटायनः, द्वितीये पक्षे च 'औद् व्रजिः' । अत्र विदुषां सम्मतं मतमस्ति यदेको व्यक्तिगतनाम्ना द्वितीयश्च गोत्रजनाम्नेति समन्वयः । अन्यच्च—गोभिलगृह्यसूत्रस्य व्याख्यातुर्भट्टनारायणस्य 'राणायनीयानाम् ऋक्तन्त्रप्रसिद्धा विसर्जनीयस्याभिनिष्ठानाख्या' इति कथनानुसारेण ऋक्तन्त्रस्य सम्बन्धो राणायनीयशाखया सह स्वीक्रियते । कथनस्याभिप्रायोऽयमत्र राणायनीयशाखान्विताया सामसंहिताया मूलाधारं स्वीकृत्य ग्रन्थोऽयं विनिर्मित इति । अस्यैव सङ्क्षेपीकरणं कृत्वा केनाप्याचार्येण 'लघु ऋक्तन्त्रम्' इति नाम्ना विरच्य प्रख्यापितम् ।

## अथर्ववेदीयं प्रातिशाख्यम्

वैदिकवाङ्मयेऽथर्ववेदस्य प्रातिशाख्यद्वयं प्रख्यातमस्ति। तत्र प्रथमत्वेन चर्चिता शौनकीया चतुरध्यायिकाऽस्ति। पाश्चात्यविदुषा डॉ० ह्विटनीमहाशयेनेयं शौनकीया सानुवादा प्रकाशिता। चतुर्ष्वध्यायेषु विभक्तमिदं प्रातिशाख्यम्। ह्विटनीप्रकाशिते ग्रन्थे शौनकस्य नामनिर्देशात् तन्नाम्नैव नामकरणमभूत्। सत्यन्त्विदमस्ति यत्—नामलेखकयोर्मध्ये महदन्तरं तिष्ठति।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये—सरस्वतीभवने सुरक्षिते हस्तलेखे कौत्सव्याकरणमिति नाम्ना विज्ञापितमिदं प्रातिशाख्यग्रन्थलेखकेन। तत्र पुष्पिकायां वर्तते 'इत्यथर्ववेदे कौत्सव्याकरणे चतुरध्यायिकायां······पाद इति'। कोऽयं कौत्सः, महाभाष्यचर्चितः पाणिनेः शिष्यः उत अन्यः? किं द्वावप्यभिन्नावेव? समीक्षणमपेक्षते एष विषयः।

## अथर्ववेदप्रातिशाख्यम्

अथर्ववेदप्रातिशाख्ये—प्रातिशाख्यविषयका केचन एव विषयाः समाख्याताः सन्ति। सन्धेः, स्वरस्य पदपाठस्य च नियमा अत्र प्रदर्शिताः सन्ति। येषु स्वरवर्णनमधिकेन विस्तरेणास्ति। प्रातिशाख्यमिदं पारिभाषिकशब्दानां तथा प्रयोगो न करोति यथाऽन्यप्रातिशाख्येषु नियमत उपलब्धा भवन्ति। शाकल्याचार्यं परित्यज्य न केषामप्यन्येषामाचार्याणामुल्लेखोऽत्र मिलति। उभावपि ग्रन्थौ पारस्परिकसहयोगेनाथर्ववेदस्य समग्रान् विषयान् निरूपयतः=प्रस्फुटीकुरुतः।

## शिक्षासाहित्यविवरणं तत्पृष्ठभूमिश्च

शिक्षाया तु द्वौ भेदौ भवितुमर्हतः—वैदिकी शिक्षा लौकिकी च शिक्षा। साम्प्रतं वैदिकीशिक्षाया एव विवरणं प्रस्तोमि तदनन्तरं सलक्षणोपसंहारपूर्वकं लौकिकीशिक्षायाः। अत्र शिक्षाया विशिष्टार्थो भविष्यति वैदिकमन्त्राणां तत्प्रयुक्तविशेषशब्दानाञ्चोच्चारणविधेः शिक्षको ग्रन्थः। येषामध्ययनं विधाय वेदमन्त्राणां शब्दानाञ्च यथार्थबोधने समर्था भवन्ति। किन्तु विद्वांसः कथयन्ति यत्—शिक्षा-प्रातिशाख्ययोर्मध्ये पारस्परिकसम्बन्धविषये मतैक्यं नास्ति। सामान्यरूपेण शिक्षाः प्राचीनानामृषीणां नामभिः सम्बद्धा भवन्ति। किञ्च तासु रचनासु अनेकाः प्राचीना रचनाः न सन्त्यपितु अर्वाचीनाः स्वीक्रियन्ते विद्वद्भिः। केषाञ्चन मते प्रातिशाख्यं शिक्षाग्रन्थानामाधारमाधाय रचितमस्ति। यद्यपि केचन शिक्षा-ग्रन्थाः प्रातिशाख्यालम्बनं विधाय निर्मिताः सन्ति। शिक्षासाहित्यस्य विपुलं भाण्डारमस्ति। तत्रोपलब्धानां विवृतानां कतिपयानां शिक्षाग्रन्थानामिहोपस्थापनं विधीयते। तद्यथा—

**व्यासशिक्षा**—वैदिकसाहित्यस्येतिहासे यत्र क्वापि 'व्यासशिक्षा'नामकस्य ग्रन्थस्य चर्चा तु विद्यते, किन्त्वस्मिन् वर्ण्यविषयाः के सन्ति इत्यस्य विवरणं नोपलभ्यते। अस्योपरि वेङ्कटरामशास्त्रिणो विरचितो 'वेदतैजस'नामको व्याख्याग्रन्थः

उपलभ्यते। नूनमनया व्याख्यया ज्ञायते यदस्यां व्याख्यायां वेदतैजसयुक्तं व्याख्यानं स्यात्।

व्यासशब्दस्यार्थो भवति—'विव्यास वेदान् यस्मात् स तस्माद् व्यास इति स्मृतः'। अतः व्यासशिक्षेयं वै विषयिका शिक्षा वर्तते।

**भरद्वाज( भारद्वाजो वा ) शिक्षा**—अस्य शिक्षाग्रन्थस्योल्लेखा इतिहासग्रन्थेषु प्रकारद्वयेन मिलन्ति। भवतु नाम भरद्वाज एव भारद्वाजः, अथवा भरद्वाजेन प्रणीता शिक्षा भरद्वाजशिक्षा, अथवा भरद्वाजापत्येनाचार्यगुरुणा द्रोणेन निर्मितेयं शिक्षा। भरद्वाजः सप्तर्षिष्वेको महनीयः ऋषिर्वर्तते। भवतु नाम। यद्वा तद्वा।

भारद्वाजशिक्षाग्रन्थस्य विषये संस्कृतसाहित्यस्येतिहासे ( गैरोलाकृते ) विवरणं प्राप्यते यत्—भण्डारकर-रिसर्च-इन्स्टीच्यूट—पूनातः एका भारद्वाजशिक्षा प्रकाशिताऽस्ति, तस्यान्तिमश्लोकोद्धरणात् तट्टीकाकर्तुश्च नागेश्वरभट्टस्य मतानुसारमयं शिक्षाग्रन्थो भरद्वाजप्रणीतोऽस्ति। परञ्च मीमांसकमहोदयैर्व्याकरणशास्त्रस्येतिहासलेखकैरुक्तं यत्—पश्चाद्वर्त्ति संस्करणमिदमस्ति। स्यान्नामेदं संस्करणं १९२९ ईसवीये मद्रासाद् प्रकाशितं महामहोपाध्यायपण्डितवेङ्कटरामशर्मणा सम्पादितं स्यात्। उपाध्यायप्रणीते वैदिकसाहित्ये किमपि विशिष्टं विवरणं तत्रोपलभ्यते। तद्यथा—

अस्य शिक्षा-ग्रन्थस्य सम्बन्धः तैत्तिरीयसंहितया सह प्रतीयते। इयं च शिक्षा 'संहिता शिक्षा' इति अभिधया व्यवहृता भवति। यतो ह्यस्याः प्रधानं लक्ष्यं संहितापदानां विशुद्धिर्वर्तते, तदर्थं विशिष्टनियमानां विवरणमस्ति। क्वचिच्च विशिष्टशब्दानां सङ्कलनमप्यस्ति। तैत्तिरीयसंहितायां 'वृजिन्'शब्दस्योपलब्धिर्भवति, परञ्च जकारस्योदात्तस्वरयुक्ते सत्ययं शब्दः अकारयुक्तो 'वृजन' शब्दो भवति ( वृजने ज उदात्तश्चेत् अकारेण सहोच्यते )। अनेनैव प्रकारेण 'पर्शु' शब्देऽन्तोदात्ते सति परशुरूपे परिणतो भवति। एतादृशा नियमा अत्र प्रदर्शिताः सन्ति। अक्षरक्रमेण ग्रन्थस्य सङ्कलनमस्ति। शिक्षाया अन्यविषयाणामत्राभावः। शिक्षेयं प्राचीना प्रतिभाति। श्रीनिवासविरचिता काप्यभिनवा 'सिद्धान्तशिक्षा' विषयप्रतिपादनेऽनुगमनं करोति। सति वैशिष्टयेऽपि शिक्षा-संग्रहग्रन्थे नाम्ना अस्योल्लेखो न दृश्यते।

**पाणिनीयशिक्षा**—अध्ययनाध्यापनयोः शैक्षणिके जगति पाणिनीयशिक्षा-याज्ञवल्क्यशिक्षे नितरां सुप्रसिद्धे स्तः। तथापि पाणिनीयशिक्षा शिक्षासङ्ग्रहेऽष्टाविंशतितमे क्रमे चर्चिताऽस्ति। भवेन्नामात्र कालक्रमस्य विषयः।

एतत् सत्यमस्ति यत्—'यद्यपि समेषां शिक्षाग्रन्थानां प्रतिपाद्यविषयः उच्चारणविधिरेवास्ति, तथापि एषु वर्णानां संख्या-स्थान-करणादिविषये बहुतरं वैषम्यमपि उपलभ्यते। आसु शिक्षासु पाणिनीयशिक्षा यादृशीं प्रसिद्धिं प्राप्ता तादृशीं प्रसिद्धिमन्या शिक्षा नाप्तवती। तथ्योक्तिरियम्।

अपरञ्चाचार्यपादैरुक्तं यत्—इयं शिक्षा अतिशयेन प्रसिद्धा लोकप्रिया चास्ति। सा च लौकिक-वैदिकोभयशास्त्रोपकारत्वात् अत्यधिका महत्त्वपूर्णा विद्यते। अस्यां शिक्षायां षष्ठिपरिमिताः श्लोकाः सन्ति। येषु उच्चारणविधिसमन्वितानां विषयाणां

सङ्क्षेपेण महदुपकारकं विवरणमुपन्यस्तमस्ति। तद्यथा—शिक्षासङ्ग्रहे तत्रोच्चारणविधिर्द्विविधः सामान्यतो विशेषतश्च। यो विधिर्वर्णसामान्यं विषयीकरोति स सामान्यतः। यथा—'व्याघ्री यथा हरेत् पुत्रान्' इत्यादिः। यश्च वर्णविशेषं विषयीकरोति स विशेषतः। यथा—'अलाबु वीणानिर्घोषः' इति। तदित्थमत्र—वर्णसामान्योच्चारणविधिः, अनुस्वारोच्चारणविधिः, रङ्गवर्णोच्चारणविधिः, उच्चारणे प्रातःसवनादि व्यवस्था च, इत्येतत् प्राधान्येन प्रतिपादितम्।

एवम्भूताया महिमामण्डितायाः पाणिनीयशिक्षाया रचयितुर्विषये विद्वांसः सन्दिग्धाः सन्ति। ग्रन्थान्ते पाणिनेरुल्लेखो दाक्षीपुत्र इति नाम्ना कृतोऽस्ति। तत्प्रशंसायाञ्चानेके श्लोकाः प्रदत्ताः सन्ति। अपरञ्चानेकत्र दृश्यते 'पाणिनिमुनिप्रणीतं शिक्षाशास्त्रम्' इत्यप्ययुक्तमेव प्रतिभाति। पाणिनिना प्रोक्तं पाणिनीयमिति विग्रह एव विरोधप्रदर्शने हेतुः। विद्वांस इत्यपि कथयन्ति यत्—पाणिनिः अस्य शिक्षाग्रन्थस्य लेखको नास्ति, न वा भवितुमर्हति। पाणिनिमतानुयायिना केनापि वैयाकरणेनास्योपयोगिनो ग्रन्थस्य रचना विहिता इति। अस्मिन् विषये पण्डितप्रकाण्डैरितिहासलेखकैः श्रीमद्भिर्युधिष्ठिरमीमांसकैः 'शिक्षासूत्राणि' इत्यस्य भूमिकायां राष्ट्रभाषायां विस्तृतं पाण्डित्यपूर्णं विवेचनं कृतमस्ति तत्सारांशो यथा—

'पाणिनीयशिक्षायाः सम्प्रति पाठद्वयं मिलति, प्रथमः सूत्रात्मको द्वितीयः श्लोकात्मकश्च। सूत्रात्मक-श्लोकात्मकयोः पाठयोरपि लघु-वृद्धसंज्ञकौ द्वौ पाठौ स्तः।

आधुनिकेषु पाणिनीयवैयाकरणेषु पाणिनीयशिक्षायाः श्लोकात्मकपाठ एव प्रसिद्धोऽस्ति। वैदिकाश्चापि वेदाङ्गान्तर्गतायाः श्लोकात्मिकायाः पाणिनीयशिक्षाया एव पाठं कुर्वन्ति। श्लोकात्मिकाया पाणिनीयशिक्षाया लघुपाठे पञ्चत्रिंशत् ( ३५ ) श्लोकाः सन्ति। वृद्धपाठे षष्टिपरिमिता श्लोकाः सन्तीति पूर्वमपि चर्चितम्। तत्र लघुपाठो याजुषपाठः वृद्धपाठश्च ऋक्पाठः। लघुपाठविषयेऽत्र मीमांसकमहोदयानां सुस्पष्टं मतमस्ति यत्—सं० १९३६ वैक्रमाब्दे प्रयागेऽनुसन्धित्सुना महात्मना श्रीमता स्वामिना दयानन्दसरस्वत्या पाणिनीयशिक्षाया यो हि लेखः सम्प्राप्तः, सः त्रुटितो लघुपाठात्मक एवासीत्। श्लोकात्मिकायाः पाणिनीयशिक्षायाः प्रथमः श्लोको वर्तते—

'अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा।
शास्त्रानुपूर्व्यं तद्विद्याद्यथोक्तं लोकवेदयोः' ॥

अत्र 'पाणिनीयं मतं यथा' इति वचनेन सुस्पष्टं भवति यत्—श्लोकात्मिका शिक्षा मूलतः पाणिनि-प्रोक्ता न विद्यते। सा तु केनाप्यन्येन पाणिनीयं मतमाधृत्य रचिताऽस्ति। श्लोकात्मिकायाः पाणिनीयशिक्षायाः प्रकाशनाम्न्याष्टीकाया रचयितुर्मते—अस्याः शिक्षायाः प्रवक्ता पाणिनेः अनुजः आचार्यः पिङ्गलोऽस्ति। तथा चोक्तं तत्र प्रकरणे—'ज्येष्ठभ्रातृभिर्विहितो व्याकरणेऽनुजस्तत्रभवान् पिङ्गलाचार्यः, तन्मतमनुभाव्य शिक्षां वक्तुं प्रतिजानीते—अथ शिक्षामिति।

अनेन प्रकारेण ग्रन्थस्यान्तःसाक्ष्येन टीकाकर्तुश्च साक्ष्येन सर्वथा सुस्पष्टं भवति

यत्—श्लोकात्मिकायाः पाणिनीयशिक्षायाः तल्लघुयाजुषपाठो भवेत्, स्यान्नाम वृद्धार्चपाठो वा, उभावपि पाठौ पाणिनिप्रोक्तौ न स्तः। अस्मिन् विषयेऽधुनापि विदुषामालोचकानां मध्ये वैमत्यं तिष्ठति। डॉ० रघुवीरमहोदयैरापिशलशिक्षा-सूत्राणां हस्तलेखद्वयं प्राप्त्यनन्तरं श्रीसरस्वतीनां मतं संस्थापितम्। श्रीमता एम० ए० पदभाजा मनमोहनघोषेण तु स्वसम्पादितपाणिनीयशिक्षासूत्रे भूमिकायां तन्मतं खण्डि-तम्। अलमत्र विवादेन।

अत्र पाणिनीयशिक्षायां वर्ण्यविषयाः सन्ति—वर्णानां विधिपूर्वकमुच्चारणविधिः, तेषां समीक्षितानां वर्णानां संख्यानिर्धारणम्, कण्ठ-तात्वादिस्थानानि, आभ्यन्तरा बाह्याश्च प्रयत्नाः, अनुस्वारस्य यमानां चोच्चारणे विशेषाः, रङ्गस्योच्चारणे विशेषः, उरस्य हकारनिरूपणम्, जिह्वामूलीयोपध्मानीययोर्विमर्शः, वर्णोच्चारणे गुणदोष-समीक्षणम्। वैदिकानां वेदाध्ययनरीतिः, त्रिभिः श्लोकैर्महर्षेः पाणिनेः स्तुतिः। इयं शिक्षा शिक्षासंग्रहे पुष्पिकायां वेदाङ्गनासिका शिक्षा निर्दिष्टा विद्यते। अत एतत्सुनिश्चितं भवति यत् वेदानां स्वाध्याये पाणिनीयशिक्षाया नितरामुपयोगिता सिद्ध्यति।

**आपिशलशिक्षा पाणिनीयशिक्षा च**—पाणिनीयशिक्षासूत्राणि आपिशलशिक्षासूत्रैः सहाधिकांशतः समतां धारयन्ति। द्वयोः सूत्रयोः पाठानां तुलनया एतत्तु स्पष्टमेवास्ति यत् द्वयोः पाठः साम्यं बिभर्त्ति। यत्र च पारस्परिकं वैषम्यमस्ति—तत्र प्रवक्तृ-भेद एव कारणमस्ति। अथवा पाठान्तरमूलकं वा। पाणिनीयपाठे ऊष्मवर्णानां पक्षान्तरे विवृतकरणं प्रयत्नं कथितमस्ति तथा आपिशलिपाठे न। अयम् आपिशलि आचार्यः पाणिनेः पूर्ववर्त्ती आसीत्। यतो हि सिद्धान्तकौमुद्याम् अच्सन्धिप्रकरणे—'वा सुप्यापिशलेः' (अष्टा० ६।१।९२) इति सूत्रमस्ति। तत्र वृत्तौ—अवर्णान्ता-दुपसर्गादृकारादौ सुब्धातौ परे वृद्धिर्वा स्यात्। अत्रैवोक्तं यत्—आपिशलिग्रहणं पूजार्थम्। इत्यनेन सिद्ध्यत्ययमाचार्यपाणिनेरपि पूजनीय आसीत्। द्वयोः सूत्रयोः साम्यमपि तथैव वर्तते। आपिशलिशिक्षासूत्रे—स्थान-करण-अन्तःप्रयत्न-बाह्यप्रयत्न-स्थानपीडन-वृत्तिकार-प्रकरण-प्रक्रम-नाभितल-प्रकरणादीनि अष्टौ प्रकरणानि विद्य-मानानि सन्ति। येषु अक्षराणामुत्पत्तिः, स्थान-प्रयत्नादीनाञ्च विवरणं विद्यते। पाणिनेः शिक्षासूत्रस्य वृद्धपाठे लघुपाठे वाऽपि आपिशलिशिक्षासूत्राणामिव क्रम-प्रकरणादीनाञ्च साम्यमस्ति। इत्येव नहि सूत्रेष्वपि विशेषरूपेण समतोपलभ्यते। अपि च आपिशल्याद्याचार्यसूत्राणामुद्धरणं श्रीमता वृषभदेवेन वाक्यपदीयटीकायां, हेमचन्द्राचार्येण स्वव्याकरणस्य बृहद्वृत्तौ, न्यासकारेण च स्वन्यासे उद्धृतमस्ति।

**चान्द्रशिक्षा**—व्याकरणशास्त्रस्येतिहासे आचार्यचन्द्रगोभिनश्चर्चा भूयसी वर्तते। इमे प्राचीना बौद्धवैयाकरणा आसन्। एभिर्यथा पाणिनेरष्टाध्यायीमवलम्ब्य महा-भाष्यञ्चानुशील्य स्वव्याकरणस्य रचना कृता, तद्वत् पाणिनीयशिक्षासूत्राणामाधार-माधृत्य स्ववर्णसूत्राणां रचना विहिता। एषां सूत्राणां संख्या एकपञ्चाशत् (५१) विद्यते। ऐतिहासिका विद्वांसः कथयन्ति यत्—इमानि सूत्राणि शर्मण्यदेशे प्रकाशिते

चान्द्रव्याकरणस्यान्ते रोमनाक्षरेषु मुद्रितानि सन्ति। तत्र प्रथमं सूत्रं—'स्थानकरण-प्रयत्नेभ्यो वर्णा जायन्ते' अन्तिमञ्च सूत्रम् 'अन्तःस्थाद्विप्रभेदा रेफवर्जिताः सानुनासिका निरनुनासिका च' विद्यते।

**याज्ञवल्क्यशिक्षा**—इयं प्राचीना शिक्षा महर्षिणा याज्ञवल्क्येन प्रणीता विद्यते। याज्ञवल्क्यश्च मिथिलादेशस्यालङ्कारभूतः परमर्षिर्धर्मशास्त्रप्रणेताऽऽसीत्। याज्ञवल्क्यस्मृतौ 'मिथिलास्थः स योगीन्द्र' इति चर्चितत्वादयं योगिनाप्यग्रगण्य आसीत्। मिथिलायां यजुर्वेदस्य सामवेदस्य च पठन-पाठनं प्राचीनकालादेव प्रवर्तते स्म। कथयन्ति सुधीजना यत् 'यजुआर, सामरि, अथरी' इत्यादयो ग्रामा वेदाध्ययनस्य केन्द्रभूता आसन्। याज्ञवल्क्यस्याश्रमभूतो ग्रामः योगिवनजगवन' अद्यापि तद्यशोगाथां गायति।

इयं शिक्षा परिमाणे बृहत्तमा विद्यते। अत्र श्लोकानां संख्या २३२ विद्यन्ते। अस्याः शिक्षायाः सम्बन्धः शुक्लयजुर्वेदस्य वाजसनेयीसंहितया वर्तते। अस्यां शिक्षायां वैदिकस्वराणामुदाहरणैस्सह विशिष्टं विस्तृतञ्च वर्णनं प्रस्तुतमस्ति। लोप-आगम-प्रकृतिभावानाञ्च चतुर्विधानां सन्धीनां विवेचनमप्युपलभ्यते। वर्णानां विभेदः, स्वरूपम्, पारस्परिकं साम्यं वैषम्यं वा इत्येतेषां सुस्पष्टं वर्णनं विद्यते।

शिक्षासंग्रहे प्रस्तावनायां भाष्यरूपेणैतस्य विवेचनमस्ति, तद्यथा—

'अस्यां शिक्षायां वर्णसमूहं चतुर्धा विभज्य स्वराः, स्पर्शाः, अन्तःस्थाः, ऊष्माणः, इत्येवं रीत्या वर्णाः प्रतिपादिताः। अतोऽविशिष्टा अनुस्वारजिह्वामूलीयोपध्मानीय-नासिक्यानुनासिक्यरङ्गा यमाश्च अत्र उक्ताः। यद्यप्यत्र एषां वर्णानां सङ्कलिता संख्या न निर्दिष्टा, नापि क, ख इत्येवं रीत्या विशिष्य वर्णाः प्रतिपादिताः, तथापि एतद् ग्रन्थानुशीलनायां अप्रतिषिद्धं परमतम् अनुमतं भवति, इति न्यायं पुरोधाय अष्टषष्टिर्वर्णाः शिक्षाकाराभिमता इति निष्कर्षः आसादितोऽस्माभिः, इत्यादि प्रतिपादनेन शिक्षाया वैशिष्टयं सुतरां सिद्धयति'।

अस्याः शिक्षायाः प्रारम्भिकश्लोको यथा—

'उदात्तश्चानुदात्तश्च स्वरितश्च तथैव तत्।
लक्षणं वर्णयिष्यामि दैवतं स्थानमेव च'॥ १॥

अन्तिमश्लोको यथा—

'युक्तियुक्तं वचो ग्राहयं न ग्राहयं गुरु गौरवात्।
सर्वशास्त्ररहस्यं तद् याज्ञवल्क्येन भाषितम्'॥ २३२॥

**वाशिष्ठी शिक्षा**—इयं पुरातनी शिक्षा महर्षिणा वशिष्ठेनानुप्राणिता निर्दिष्टा च विद्यते।

तद्यथा तत् शिक्षाप्रारम्भे एव—

'अथ शिक्षां प्रवक्ष्यामि वाशिष्ठस्य मतं यथा।
सर्वानुक्रममुद्धृत्य ऋग्यजुषोस्तु लक्षणम्'॥ १॥

इति श्लोकानुसारमेव इयं शिक्षा ऋग्यजुर्विभागात्मिका वाशिष्ठी शिक्षा कथ्यते । शिक्षेतिहासविदो विद्वांसः कथयन्ति यत्—अस्याः शिक्षायाः सम्बन्धो वाजसनेयी-संहितया सह विद्यते । अस्यां संहितायां समागतानाम् ऋक्मन्त्राणां यजुर्मन्त्राणां च पार्थक्यमत्र महता विस्तरेण कृतमस्ति । एतच्छिक्षानुसारं शुक्लयजुर्वेदस्य समग्रायां संहितायां ऋग्वेदीयमन्त्रा १४६७ मुनिषड्वेदभूमिताः परिमिताः सन्ति यजुषाञ्च सं० २८२३ रामाक्षिवसुयुग्मकाः परिमिताः सन्ति । अयं संख्याविभागो वेदाध्ययन-कर्तृभ्यश्छात्रेभ्यो विद्वद्भ्यश्च महदुपकारकोऽस्ति । उपर्युक्तस्य विचारस्य भाष्य-भूतोंऽशः शिक्षासंग्रहे निम्नाङ्कितरूपेणास्ति—'अस्यां शिक्षायां शुक्लयजुर्वेदसंहितायां प्रत्यध्यायं कति यजूंषि कति च ऋचः इत्येव संख्यातम् । यजुःशब्देन गद्यात्मको मन्त्रः, ऋक्शब्देन छन्दोबद्धो मन्त्रः उच्यते । एतत् संख्यानस्य अयमेवोपयोगो भवितुमर्हति यत्—यथा काव्येषु पुराणेषु च बहवः श्लोकाः प्रक्षिप्ताः भवन्ति, येन काव्यादीनां मूलं स्वरूपं विदारितमेव भवति । अयमेव प्रक्षेपजनितविक्षेपो वेदे मा भवतु, अतः ऋचां यजुषां च परिगणनमेव कृतम्' । इत्यलमतिविस्तरेणास्मिन् विषये ।

**कात्यायनी शिक्षा**—महर्षिणा कात्यायनेन प्रणीतेयं शिक्षा कात्यायनी शिक्षा कथ्यते । अस्यां शिक्षायां केवलं त्रयोदश श्लोकाः सन्ति । येषु वेदे प्रयुक्तस्वराणां तत्रापि विशेषेण स्वरितस्य लक्षणोदाहरणपूर्वकं निरूपणमस्ति । पर्यवसाने च स्वरित-लक्षणचतुष्टयस्य जात्याभिनिहितक्षैप्रप्रश्लिष्टस्य पितृदानवद् हस्तं कृत्वा स्वरयितव्य-मिति पितृश्रवणमुक्तम् । पितॄणां तर्पणकाले पिण्डदानसमये वा यादृशाकारं हस्तं कृत्वा अन्नं पिण्डो वा दीयते तादृशाकारता एव हस्तस्य जात्यादि स्वरितोच्चारणकाले इत्याशयः । तद्यथा प्रथमे श्लोके—

'यदुदात्तात्परं नीचं स्वार्थं तत्परतो न चेत् ।
उदात्तात्स्वरितं वा स्याद्यत्र स्यात्स्वरितं वदेत्' ॥ १ ॥

अन्तिमश्लोको यथा—

'यन्नीचं पदकाले तत्संहितायां तथैव च ।
उक्तं वा नीचहीनं चेत्पितृश्रवणं तद्भवेत्' ॥ १३ ॥

एषु श्लोकेषु जयन्तस्वामिनो व्याख्या विद्यते । शिक्षासंग्रहे इयं कात्यायनी शिक्षा दुर्विज्ञेया कथिताऽस्ति । स्वामिनो व्याख्यानत्वात् सुविज्ञेया सञ्जाता ।

**पाराशरी शिक्षा**—महर्षिणा पाराशरेण विरचितेयं शिक्षा पाराशरी-शिक्षा कथ्यते । अस्याः शिक्षाया महती उपयोगिता निर्दिष्टा ग्रन्थकारेण । तदनुसारं सर्व-शास्त्रेषु अस्याः शिक्षाया महत्त्वं गीयते । तत्र स्पष्टरूपेणोद्घोषितमस्ति यत्—

'यथा देवेषु विश्वात्मा यथा तीर्थेषु पुष्करम् ।
तथा पाराशरी शिक्षा सर्वशास्त्रेषु गीयते' ॥

अस्यां शिक्षायां षष्टयुत्तरैकशतसंख्यकाः ( १६० ) श्लोकाः सन्ति । तेषु स्वरवर्ण-सन्ध्याद्यावश्यकविषयाणां मार्मिकं विवेचनमस्ति । शिक्षासङ्ग्रहे भूमिकायां शिक्षाया व्याख्यानं विद्यते यत्—'अस्यां शिक्षायामपि त्रिमात्रस्य त्रिदैवतस्य त्रिरूपस्य

त्रिस्थानस्य त्रिगुणस्य प्रणवस्य विचारं विधाय वेदान्तर्गतप्रथमकण्डिकासु अक्षर-संख्यादिविचारः, स्वराणां पौर्वापर्यविचारः, को लघुः कश्च लघुतरः, को गुरुः, कश्च गुरुतरः एवं वर्णानां विन्यासविचारः, वर्णोच्चारणे यथास्थितिभावः, कार्यः प्रमादो न विधेयः'। अत एवोक्तं पाराशरेणान्तिमायां शिक्षायाम्—

'एवं ज्ञात्वा पठेद्यस्तु स गच्छेद् वैष्णवं पदम् ।
न मे प्रियो द्विजः कश्चिच्छुद्धपाठी त्वतिप्रियः' ।। १५९ ।।

इयं शिक्षा महर्षिणा पाराशरेण विप्राणां हितकाम्यया, शिष्याणामुपकाराय परलोकहिताय च प्रोक्ता ।

अपरञ्च—अस्यां शिक्षायां सन्ति बहुविधाः लोकोपयोगिन्यः शिक्षाः याः मानवान् सन्मार्गे उन्मुखी कुर्वन्ति प्रेरयन्ति च ज्ञानाय । तद्यथा—

'पठित्वा चतुरो वेदान् सर्वशास्त्रमनेकधा ।
यो हि ब्रह्म न जानाति मूर्खः पाठे शठो यथा' ।। १४९ ।।

अन्यच्च—

'यथा खरश्चन्दनभारवाही भारस्य वेत्ता न तु चन्दनस्य ।
तथा हि विप्राः स्मृतिवेदपूर्णा ज्ञानेन हीनाः खरवद्वहन्ति ।। १५० ।।
आहारनिद्राभयमैथुनञ्च समानमेतत्पशुभिर्नराणाम् ।
ज्ञानं हि तेषामधिको विशेषो ज्ञानेन हीनाः पशुभिः समानाः' ।। १५१ ।।

इत्यलं पल्लवितेनास्याः शिक्षाया वैशिष्ट्यविषये ।

**माण्डव्यशिक्षा**—महर्षिणा माण्डव्येन विरचितेयं शिक्षा माण्डव्यशिक्षा कथ्यते । क्वचित् माण्डवी शिक्षाऽपि निगद्यते । अस्यां शिक्षायां विशेषतः ओष्ठ्यवर्णानां विवेचनमस्ति । तद्यथा ग्रन्थारम्भे—

'अथातः सम्प्रवक्ष्यामि शिष्याणां हितकाम्यया ।
माण्डव्येन यथा प्रोक्ता ओष्ठ्यसंख्या समाहृता' ।।

अस्याः शिक्षाया आन्तरङ्गिकः सम्बन्धः शुक्लयजुर्वेदेन सह विद्यते । अत्र विशेषतः वाजसनेयीसंहितायां समागतानामोष्ठ्यवर्णानां सङ्ग्रहो विद्यते । ग्रन्थकारेण समग्रा संहिता विधिवदधीत्योपादेयोऽयं ग्रन्थो विलिखितः । अन्येभ्यः शिक्षा-ग्रन्थेभ्योऽस्य वैशिष्ट्यमवलोकनेनैव प्रतीयते ।

अन्यशिक्षाग्रन्थानामपेक्षया स्वराणां वर्णानां तथा न विचारः कृतः यथा—ओष्ठ्यवर्णानां विपुलांशेनात्र विचारः सन्निवेशितः । इत्येव नहि सूक्ष्मदृष्ट्या अवलोकनेन प्रतीयते यदत्र यजुर्वेदसंहितायां प्रत्येकस्मिन् अध्याये कियत्संख्यकानि बकारघटितानि पदानि सन्ति । तानि च कतिवारं अध्याये प्रयुक्तानि सन्ति इत्यपि प्रत्यपादि । भाषाव्यवहारे लेखने च बहुधा दृश्यते यद्विद्वांसोऽपि यथास्थित्युच्चारणं न कुर्वन्ति । कुत्र वकारोच्चारणं कर्त्तव्यं कुत्र च बकारोच्चारणं कर्त्तव्यमित्यत्र त्रुटिः जायते । लेखने तु कथैव नास्ति । अलङ्कारशास्त्रे यमकाद्यलङ्कारेषु—अनुप्रासादिषु वा वर्ण-साम्येन—यथार्थोच्चारणं न कुर्वन्ति । धकार-नकारयोरैक्यमुद्घोषयन्ति । एतदव्यवस्था

साङ्कर्यं वा मूले वेदे मा भवतु, इत्याशयेन परिगणनमावश्यकमासीत् । अत्रायमाशयः—प्रचलितायां भाषायामनेकत्र शब्दव्यवहारेषु साङ्कर्यं दृश्यते तत्र प्रवीणैः शाब्दिकैः निर्णयः कर्तुं शक्यते । मुख्यतः वकार-बकारयोः शब्दयोः सम्भाषणे लेखने वा हृदि शङ्का जागर्ति, किमत्र भाव्यमिति वकारः बकारो वा यथा 'वाल्हीक'शब्दे 'बाहीक'-शब्दे वा । पुराणेषु काव्येषु स्मृतिषु वा प्रकरणादीनामूहापोहेन निश्चेतुं शक्यते यत् किमत्र भाव्यमिति । न च तादृशी स्थितिर्वेदे दृश्यते—तत्र तु क्वचित् व्यत्ययभावेनान्यवर्णप्रयोजने भिन्नवर्णोऽपि योग्यतां लभते, यथा—'तमसो गा अदुक्षत्'—इत्यस्मिन् स्थाने धकारसम्भाविते स्थाने दकार एव साधुः गण्यते । इत्यादि निर्णयार्थमेवेयं शिक्षा प्रवर्त्तते । विद्वज्जनाः विदन्ति यदथर्ववेदीयदन्त्योष्ठविधिर्नामकः ग्रन्थोऽस्ति, यस्मिन् अथर्ववेदसंहितायां समागतानां वकार-बकारप्रयुक्तानां पदानां परिसंख्यानं विद्यते । अतः इयं शिक्षा सोद्देश्या परोत्कृष्टा च विद्यते । अस्यां शिक्षायां चत्वारिंशन्मन्त्रमिताः ( ४० ) शिक्षाः सन्ति ।

**अमोघानन्दिनी शिक्षा**—इयं शिक्षा यथार्थनाम्नी वर्तते । अत्र ग्रन्थकर्त्रा यथा प्रतिज्ञातं तदनुसारेण इयममोघानन्दकारिणी शिक्षा विद्यते । अर्थात् अमोघम् आनन्दं प्रददाति या साऽमोघानन्दिनी । अस्मिन् विषये ग्रन्थादावुक्तं यत्—

'अथ शिक्षां प्रवक्ष्यामि ह्यमोघानन्दकारिणीम् ।
यस्याः श्रवणमात्रेण सर्वत्र विजयी भवेत्' ॥

अस्यां शिक्षायां त्रिंशदुत्तरशतश्लोकाः ( १३० ) ( इति यावत् ) श्लोकाः सन्ति । येषु स्वराणां वर्णानाञ्च सूक्ष्मातिसूक्ष्मो विचारो वर्त्तते । यथोक्तं तत्रैव—

'ओष्ठ्या दन्त्या लघुश्चैव पुनरेव लघूत्तरः ।
नादनासिक्यसहिताँल्लक्षणानि पृथक् पृथक्' ॥

इति निरूपणानन्तरं संहिताग्रन्थे ओष्ठ्यादिवर्णानां परिसंख्यानमादौ कृतम् । तत्र पञ्चविंशतिकारिकापर्यन्तं वकारघटिताः, तद्घटिताश्च शब्दाः परिगणिताः, तत्र सूक्ष्म-सूक्ष्मातिस्वरूपाणां विवेचनं विद्यते । अस्यां शिक्षायां सर्वतोऽधिकं वैशिष्टचन्त्विदमस्ति यत् वर्णानामुच्चारणे सर्वदा अनुभूतानां विषयाणामेवोपमाभावेन तुलनां करोति ग्रन्थकारः । तद्यथा कतिपयपद्येषूदाहरणमुखेन प्रस्तूयते—

'शून्ये गृहे पिशाचोऽपि गर्जते न च दृश्यते ।
एवं वर्णाः प्रयोक्तव्या उपज्ज्मन्निति निदर्शनम् ॥ ५० ॥
लोहकार इवा, कर्म्म भस्मसात् कुरुते यदि ।
एवं वर्णाः प्रयोक्तव्याः संवत्सरो निदर्शनम् ॥ ५४ ॥
यथा मीनार्थिनः पक्षिणऽउत्पतन्ति पतन्ति च ।
एवं वर्णाः प्रयोक्तव्याः कल्याण्य इति दर्शनम् ॥ ५६ ॥
कूर्मपृष्ठं परित्यज्य कर्त्तव्यमश्वत्थपत्रवत् ।
एवं हि कुरुतेऽभिज्ञो देवस्य त्वेति दर्शनम् ॥ ५७ ॥

कुक्कुटः कामलुब्धो वा ककारद्वयमुच्चरेत् ।
एवं वर्णाः प्रयोक्तव्याः कुक्कुटोऽसि निदर्शनम् ॥ ५८ ॥
यथा बालस्य सर्पस्य निश्श्वासो लघुचेतसः ।
एवमूष्मा प्रयोक्तव्यो हकारपरिवर्जितः ॥ ६१ ॥
यथा पुत्रवती स्नेहाच्चुम्बती च पुनः पुनः ।
तन्मुखं कुरुते प्राज्ञो युञ्जानऽइति दर्शनम् ॥ ६२ ॥
यथा कामातुरा नारी शब्दं करोति यादृशम् ।
तच्छब्दं कुरुते प्राज्ञः सिꣳ ह्यसि निदर्शनम् ॥ ६३ ॥
यथा मर्कटयोर्युद्धं रोषेण प्रतिधावति ।
एवं वर्णाः प्रयोक्तव्याः किकिदीवि निदर्शनम् ॥ ६४ ॥
मूत्रं करोति वडवा योनिं कुर्वीत यादृशीम् ।
तन्मुखं कुरुते प्राज्ञः स दुन्दुभे निदर्शनम् ॥ ६५ ॥

एवमत्र––पिशाचस्य गर्जनं, लौहकारस्य भर्जनं, पक्षिणां पतनोत्पतनं, कुक्कुटानां गतिः, बालस्य सर्पस्य श्वासचलनं, कामातुरायाः नार्यः कामावस्थाचरणम्, वडवायाः मूत्रविधानक्रियास्वरूपम्, इत्येते लौकिकविषयाः सन्ति, येषामुदाहरणमुखेन वर्ण-शिक्षायां व्यवहाराः सन्ति ।

अस्याः शिक्षाया एकं सङ्क्षिप्तं संस्करणमप्युपलभ्यते । यस्मिन् केवलं सप्तदश ( १७ ) श्लोकाः सन्ति ।

**माध्यन्दिनी शिक्षा**—यतः माध्यन्दिनमहर्षिणा प्रणीतेयं शिक्षा वर्त्तते, अतो माध्यन्दिनी शिक्षा निगद्यते । कोऽयं माध्यन्दिनो माध्यन्दिनं वा, माध्यन्दिनस्तु वाजसनेयिसंहिताया एका शाखा, माध्यन्दिनन्तु शुक्लयजुर्वेदस्यैका शाखा यस्यानुसरणं माध्यन्दिनः करोति ।

अस्यां शिक्षायां विशेषतः द्वित्वनियमानां विचारः प्रवर्त्तते । तथा चाह ग्रन्थकारः––

'स्वराद् द्वित्वमवाप्नोति व्यञ्जनं व्यञ्जने परे ।
हरौ न यद्यचः पूर्वौ निमित्तं व्यञ्जनस्य च' ॥

अत्र चत्वारिंशत् गद्यखण्डेषु वर्णितेयं शिक्षा विद्यते । अस्याः पुष्पिकायामुक्त-मस्ति यत्––'एवं चतुष्षष्टयुत्तरशतं लोपाः । एकादशोत्तरमष्टादशशतैः सहेति' । एतेनैवास्याः शिक्षाया वैशिष्टयं सिद्धयति ।

अत्रैका 'लघुमाध्यन्दिनीया शिक्षा' अपि विद्यते । यस्यां शिक्षायां वैदिकसन्धि-विचारो विसर्गोच्चारणविधिः उदात्तादीनामङ्गुल्या निर्देशप्रकारश्चेति विषयत्रयं प्राधान्येन निरूपितम् । इयं पद्यात्मिका वर्तते । अष्टाविंशतिः श्लोका अत्र विराजन्ते ।

**वर्णरत्नप्रदीपिका शिक्षा**—प्रस्तुतेयं शिक्षा वर्णरत्नप्रदीपिका वस्तुतः वर्ण-( अक्षर )रत्नानां प्रदीपिका—प्रकाशिका विद्यते । अयं महनीयः शिक्षाग्रन्थो

भारद्वाजगोत्रोत्पन्नेन केनापि––अमरेशनामकेन विदुषा विरचितः। तथा चोक्तं वर्णरत्नप्रदीपिकायामेव––

'उत्पन्नो यः स्तुते वंशे बुद्धिमान् कृतनिश्चयः।
अमरेश इति ख्यातो भारद्वाजकुलोद्वहः' ॥

अयम् अमरेशः भगवतः श्रीकृष्णस्य परमोपासक आसीदिति तद्ग्रन्थेनैव प्रमाणीभवति। तत्र कल्याणप्राप्त्यर्थं सर्वात्मना श्रीकृष्णं स्तौति, तद्यथा––

'श्रेयो दिशतु नः कृष्णः कंसमातङ्गकेशरी।
राधाकेलिकलाऽभिज्ञो गोपीवादकुतूहली' ॥

इयं शिक्षा प्रातिशाख्यानुसारिणी वर्त्तते तथा च बालानां वर्णज्ञानादिहेतवे पाठशुद्धचर्थंञ्च विरचिताऽस्ति। अस्मिन् शिक्षाग्रन्थे––सप्तविंशत्युत्तरशतद्वय( २२७ )-श्लोकाः सन्ति। तेषु तेषु श्लोकेषु वर्णानां स्वराणां सन्धीनाञ्च साङ्गोपाङ्गं विस्तरेण विवेचनमस्ति। संक्षेपेणैतत्कथने न कापि विप्रतिपत्तिर्वर्तते यदियं शिक्षा मन्त्ररहस्यस्य मञ्जूषा वर्तते इत्येव नहि एतत् सर्वं विदित्वा कोऽप्यध्येता ब्रह्मलोके सादरं महीयते = पूज्यते। अस्य शिक्षाग्रन्थस्य पठनस्य धारणस्य च फलश्रुतिरपि विलक्षणैव। तद्यथा––

'अनेन विधिना वेदं योऽधीते श्रद्धया द्विजः।
सोऽश्वमेधसहस्रस्य फलं प्राप्नोति पुष्कलम् ॥ २२५ ॥
रहस्यं यो न जानाति लक्षणं चार्षकादिकम्।
सोऽध्यापनेन योग्यः स्याज्जपहोमादिकर्मसु ॥ २२६ ॥
अमरेशकृतामेतां शिक्षां यो धारयेत्सुधीः।
विद्वज्जनसभामध्ये जयं स लभते ध्रुवम्' ॥ २२७ ॥

**केशवी शिक्षा**—प्रस्तुतेयं शिक्षा प्रतिज्ञासूत्रानुसारिणी विद्यते। अस्याः शिक्षाया रचयिता मुनेः आस्तीकस्य वंशजस्य गोकुलदैवज्ञस्य पुत्रः केशवदैवज्ञ आसीत्। अयं केशवदैवज्ञो ज्योतिषशास्त्रस्यापि मर्मज्ञो विद्वान् आसीत्। आस्तीकमुनेश्चास्तिकता तु सुप्रसिद्धैवास्ति। यस्य आख्यां श्रुत्वैव क्रोधयुताः सर्पा अपि इतस्ततः पलायन्ते। एवम्भूतस्य महिमान्वितस्य महामुनेः अयम् अपत्यश्रेणीकः।

इयं शिक्षा प्रकारद्वयस्योपलब्धा भवति। तत्र प्रथमायां शिक्षायां माध्यन्दिन-शाखासम्बद्धानां परिभाषाणां विस्तृतं विवेचनमस्ति। प्रतिज्ञासूत्रस्य नवसंख्यकानां सूत्राणां विस्तृतेनोदाहरणमुखेन व्याख्यानमत्र सन्निविष्टमस्ति। अपरश्च––वेदमात्र-विषयकः सन्धिविचारोऽप्यादितः अन्तं यावत् कृतः। अस्य द्वितीया शिक्षा च पद्यात्मिका वर्तते, यस्याम् एकविंशतिपद्येषु स्वरस्य विस्तृतः विचारः विद्यते।

**मल्लशर्मशिक्षा**—यतः श्रीमता मल्लशर्मणा वेदाध्ययनस्य प्रक्रियां सुदृढीकरणाय हस्तस्वरप्रक्रियादीनां योजनां विधायेयं शिक्षा विनिर्मिता, अत इयं शिक्षा मल्लशर्म-शिक्षा कथ्यते वेदाध्ययनतत्परैर्वैदिकैः। अयं मल्लशर्मा स्वपरिचयं शिक्षान्ते ददाति, तदनुसारमयं कान्यकुब्जदेशीय-उपमन्युगोत्रीय-अग्निहोत्री-वाक्पतितनूज-पितृभक्त-घाटमपुरवासि-मल्लशर्मा आसीत्। तथा चोक्तं तत्र शिक्षायाम्––

'श्रीमता कान्यकुब्जेन ह्युपमन्य्वग्निहोत्रिणा ।
श्रीमद्वेदस्वरूपाणां श्रीमद्वाक्पतिशर्म्मणाम् ॥
सूनुना पितृभक्तेन मल्लविप्रेण धीमता' ।

अस्यां शिक्षायां पद्यानां संख्या पञ्चषष्टिमिता ( ६५ ) विद्यते । तथा चास्याः शिक्षाया रचनाकालः १७८१ वैक्रमे वर्षे, कार्तिके मासे, शुक्लपक्षे एकादश्यां शनौ दिवसे समाप्तिमगादिति तत्रस्थश्लोकाभ्यां प्रमाणितो भवति । तद्यथा––

'विक्रमार्कगताब्देषु चन्द्रवस्वगभूमिषु ।
ऊर्ज्जमासे सिते पक्षे ह्येकादश्यां शनेर्दिने ॥
कृतेयं बालबोधाय स्वहस्तस्वरप्रक्रिया' । इति ।

**स्वराङ्कुश-शिक्षा**—अस्यां शिक्षायामादितः समाप्तिपर्यन्तम् उदात्तादिस्वराणामेव प्राधान्येन विवेचनमस्ति । तथा चोक्तं ग्रन्थकारेण ग्रन्थादावेव––'वक्ष्येऽहं स्वरनिर्णय-मि'ति । पञ्चविंशतिपद्येषु ग्रथितेयं शिक्षा श्रीमता जयन्तस्वामिना विरचिता । केचन विद्वांसो रावणकृता 'स्वराङ्कुशा शिक्षा' इत्यपि प्रतिपादयन्ति, तच्छोधनीयम् । यतो हि पुष्पिकायान्तु उक्तमस्ति यत्—

'जयन्तस्वामिना प्रोक्ताः श्लोकानामेकविंशतिः ।
स्वराङ्कुशेति विख्याता बह्वृचां स्वरसिद्धये' ॥ २३ ॥

एतदनन्तरमपि श्लोकद्वयमुपलभ्यते । अतोऽत्र पञ्चविंशति श्लोकाः सन्ति ।

**षोडशश्लोकी शिक्षा**—यतः षोडशसंख्यकैः श्लोकैरियं शिक्षा परिपूर्णा भवत्यतः षोडशश्लोकी शिक्षेयमभिहिता भवति । श्रीमता रामकृष्णेनेयं शिक्षा विरचिताऽस्ति । अस्यां शिक्षायां त्रिषष्टि वर्णाः परिसंख्याताः सन्ति । तेषु वर्णेषु द्वाविंशतिसंख्यकाः स्वराः, त्रयस्त्रिशद् संख्यकानि व्यञ्जनानि, चतुस्संख्यकाः यमाः एतदतिरिक्तमनु-स्वारविसर्गजिह्वामूलीयोपध्मानीयाश्च सम्मिलिताः भवन्ति । अपरञ्चात्र—द्वाविंशति-स्वरसंख्याप्रतिपादनेन न दीर्घलृकारो गृहीतः ग्रन्थकारेण ।

अस्याः शिक्षायाः प्रवक्ता स्वयं स्वयम्भूः विद्यते, अन्यच्च वाच उच्चारणविधि-रस्याः प्रयोजनकर्तृत्वं विद्यते । तत्रादावेव ग्रन्थकारः प्रोवाच—

'अथ शिक्षां प्रवक्ष्यामि वाच उच्चारणे विधिम् ।
यथा संव्यवहारेषु स्वयं प्रोक्ता स्वम्भुवा' ॥

अपरञ्चास्याः शिक्षायाः प्रतिदिनं पठनेन 'यत्किञ्च जगत्यां जगत्' तत्सर्वं प्राप्नो-तीति वैशिष्टचम् । तथा चाह ग्रन्थकारोऽन्तिमे श्लोके—

'शिवा यान्निसृतां शिक्षां प्रयतो यः पठेदिह ।
पुत्र-कीर्त्ति-धनायुष्मानृत्स्वर्गेऽतिमश्नुते' ॥

**अवसाननिर्णयशिक्षा**—अस्याः शिक्षाया लेखकः कश्चित्विपश्चित् 'अनन्तदेव'-संज्ञको विद्यते । अनेन विदुषा शुक्लयजुर्वेदसम्बद्धाः शिक्षाः विरचिताः । अस्यां शिक्षायां विशेषरूपेणावसानस्य निर्णयो वर्तते । एष्ववसानेषु निरवसानानि, मध्या-वसानानि, अवसानानि, चतुरवसानानि, पञ्चावसानानि, नवावसानानि मन्त्रखण्डानि

च प्रदर्शितानि सन्ति । अस्य विदुषः प्रज्ञानं गणेशप्रसादादभूदिति ग्रन्थारम्भे संसूचितं भवति । तद्यथा—

'नमस्कृत्य तु तं देवं शङ्करस्य सुतं प्रभुम् ।
यस्य प्रसादाद्देवस्य बुद्धिभेदोऽत्यभून्मम' ॥

अपरश्चास्याः शिक्षाया निर्माणकालः परवर्तियुगे १९४६ मिते वर्षे ग्रन्थपुष्पिकया प्रमाणितो भवति । तद्यथा पुष्पिकायाम्—

'रसवेदाङ्केन्दुमिते (१९४६) फाल्गुने शुक्लपक्षके ।
पूर्णिमायां गुरोर्वारेऽवसानान्यङ्कितानि वै' ॥

**स्वरभक्तिलक्षणपरिशिष्टशिक्षा**—द्विचत्वारिंशत्पद्येषु ग्रथितेयं शिक्षा यथार्थनाम्नी स्वरभक्तिलक्षणपरिशिष्टशिक्षा कथ्यते। इयं शिक्षा च महर्षिणा कात्यायनेन विरचितेति ग्रन्थपुष्पिकया एव ज्ञायते, तद्यथा—

'ज्ञात्वैतन्मनुजो याति ब्रह्मलोकं सनातनम् ।
इति कात्यायनेनैव परिशिष्टं कृतं मुदा' ॥

अपरश्चास्यां शिक्षायामष्टौ स्वराः वर्णिताः सन्ति । तेषां नामानि च सन्ति— ( १ ) तैरोविराम, ( २ ) क्षैप्र, ( ३ ) तैरोव्यञ्जन, ( ४ ) तथाभाव्य, ( ५ ) अभिनिहित, ( ६ ) जात्य, ( ७ ) पादवृत्त, ( ८ ) प्रश्लिष्ट इति । एतेषामुदाहरणानि च वैदिकानि ग्रन्थे निर्दिष्टानि सन्ति ।

अन्यच्च—वर्णोच्चारणविधानं, करिण्यादिपञ्चविधस्वराणां लक्षणानि मन्त्रभागे समागतानि चोदाहरणानि प्रयुक्तान्यत्र सन्ति । तथा चाह ग्रन्थकारो ग्रन्थादौ—

'अथातः सम्प्रवक्ष्यामि सर्वलक्षणलक्षिताम् ।
शिक्षां समासतस्तत्र स्वरास्त्वष्टौ प्रकीर्त्तिताः ॥
तैरो विरामः क्षैप्रश्च तैरो व्यञ्जकस्तथा ।
भाव्योऽभिनिहतो जात्यः पादवृत्तश्च सप्तमः' ॥
प्रश्लिष्ट इति विज्ञेयाः........................ ।

अनेन प्रकारेणेयं शिक्षा सर्वलक्षणलक्षिता विद्यते ।

**प्रातिशाख्यप्रदीपशिक्षा**—विविधमहिमामण्डितेयं शिक्षा शिक्षा-ग्रन्थेषु मुख्यतमा विद्यते । अस्योपादेयत्वं निर्विवादमस्ति । अस्याः शिक्षाया लेखकः सदाशिवतनयः बालकृष्णनामकः कश्चिद् विपश्चिद् विद्यते इति तद्ग्रन्थेनैव सूच्यते । तद्यथा—

'सदाशिवतनूजेन बालकृष्णेन धीमता ।
प्रातिशाख्यप्रदीपाख्या शिक्षा सम्यङ् निरूप्यते' ॥

अस्यां शिक्षायां प्राचीनग्रन्थोक्तमतान्याहृत्य स्वर-वर्णादीनां शिक्षायाः सर्वविधविषयाणां पुष्कलं विवेचनमुपलभ्यते । यथोक्तं ग्रन्थकारेणैव—

'प्रातिशाख्यं च शिक्षाश्च सम्यगालोच्य यत्नतः ।
वैदिकानां सुबोधाय सम्यक् पाठस्य सिद्धये' ॥

अत्र पूर्वं वेदाध्ययनप्रकारो याज्ञवल्क्यमतेन निरूपितः। तदनु उच्चैरुदात्तादीनां सूत्राणां प्रतिज्ञासूत्रानुसारं व्याख्यातमस्ति। एवमेव कतिपयपाणिनीयसूत्राण्याधृत्य सन्ध्यादीनां विचारोऽपि सुव्यवस्थितो वर्तते। आकृत्या विषयनिरूपणेन चेयं शिक्षा महत्तमा विद्यते।

**नारदीयशिक्षा**—( सामवेदीया विशेषतः ) अस्याः शिक्षायाः संज्ञावधारणात् निश्चीयते यदियं देवर्षिणा नारदेन प्रवर्तिताऽऽसीत्। अस्या महनीयायाः शिक्षाया व्याख्यात्रा श्रीमता भट्टशोभाकरेणाप्युद्घोषितं यत्—

'प्रणम्य परमात्मानमृक्सामस्वरविग्रहम्।
मुनिना नारदेनोक्तां शिक्षां व्याख्यातुमिष्यते'॥

इयं शिक्षा वस्तुतः सर्वेषां वेदानां स्वरोच्चारणविधिं प्रतिपादयति किन्तु सामवेदस्य प्राधान्यं विद्यते। अत एव विद्वांसः सामवेदसम्बद्धेयं शिक्षा स्वीकुर्वन्ति। अस्मिन् विषये भट्टमहोदयेन व्याख्यातं यत्—

'अथ सामसंहिताध्ययनादनन्तरमत इति संहिताध्ययनात् क्षिप्रं सर्वेषां शास्त्राणामृक्सामगतानां निश्चय सम्यक् स्वरूपप्रतिपत्तिवेदमयोच्यमानं जानीयादिति भगवान्नारदः सामान्येन शिष्यं प्रत्याह—सामान्यभूत ओङ्कारगतस्वरूपः उच्च-नीच-विशेषे उच्चतरे-उच्चतमे नीचे-नीचविशेषे नीचतरे नीचतमे च स्थानाभिव्यज्यमानः स्वरान्यत्वं नाना स्वरतां प्रतिपाद्यत इति'। अन्यच्च—

ऋक्सामयजुरङ्गानि ये यज्ञेषु प्रयुञ्जते।
अविज्ञानाद्धि शास्त्राणां तेषां भवति विस्वरः॥ ४॥
सामवेदे तु वक्ष्यामि स्वराणां चरितं यथा।
अल्पग्रन्थं प्रभूतार्थं श्रव्यं वेदाङ्गमुत्तमम्'॥ ( द्वि० क० १ )

अत्रायमाशयो विद्यते यत्—सामवेदस्वराणां मूलभित्तिपरिज्ञानायेयं शिक्षा—अतिशयेनोपयोगिनी विद्यते। कण्डिकासु विभक्तेयं शिक्षा द्वितीयप्रपाठके पूर्णा भवति।

**कतिपयोपयोगिन्यः शिक्षाः**—

'यथा खनन् खनित्रेण भूतले वारि विन्दति।
एवं गुरुगतां विद्यां शुश्रूषुरधिगच्छति॥
सुश्रूषारहिता विद्या यद्यपि मेधागुणैः समुपयाति।
बन्ध्येव यौवनवती न विद्या फलवती भवति'॥

**गौतमी शिक्षा ( सामवेदीया )**—महर्षिणा गौतमेन प्रवर्तितत्वादियं शिक्षा गौतमी शिक्षेति नाम्न्या कथयन्ति सामवैदिकाः। अस्यां शिक्षायां प्रपाठकद्वयं वर्तते। प्रथमे प्रपाठके अष्टौ नव वा द्वितीये प्रपाठके च सप्तसंख्यका अवान्तरनियमाः सन्ति। पर्यन्ते संसूचितमस्ति यत्—'गौतमेनोक्तं न सप्ताक्षरातपरः संयोगो भवत्येषा सहस्रवर्त्मात्मा नानावर्तिविभूषिता, संयोगश्रृङ्खलानाम साम वेदनिबन्धनादिति।

अत्र प्रारम्भे एव 'अथ त्रयस्त्रिंशद् व्यञ्जनानि भवन्तीति प्रतिपाद्य व्यञ्जनानां त्रयस्त्रिंशद् संख्या निर्धारिता, अनन्तरं त्रिविधः संयोगपिण्डो भवति इत्युक्तं, तद्यथा—

अयस्पिण्डो दारुपिण्ड उर्णपिण्डश्च । तत्र यमसहितमयस्पिण्डम्, दारुपिण्डमन्तस्थैर्ययुक्तम्, यमान्तस्थवर्जन्तूर्णापिण्डमित्यन्तस्थयमसंयोगे विशेषो नोपलभ्यत इत्यशरीरं यमं विद्यादन्तस्थः पिण्डनायकः । विंशतिः आनन्त्याः भवन्ति ।

अपि च द्व्यक्षराणां, त्र्यक्षराणां, चतुरक्षराणां, पञ्चाक्षराणां, षडक्षराणां सप्ताक्षराणां च द्विर्भावाः समुदाहृताः सन्ति ।

**लोमशी शिक्षा ( सामवेदीया )**—प्रस्तुतेयं शिक्षा सामवेद-अध्येतॄणां सामगानां परमोपकारिका विद्यते नास्त्यत्र सन्देहावसरः । किं भूतेयं लोमशी इति सुस्पष्टं न प्रतीयते । शिक्षायाः प्रारम्भे लिखितमस्ति यत्—

'लोमश्यां प्रवक्ष्यामि गर्गाचार्येण चिन्तिताम् ।
सामिधानीं यथोक्तं तु स्वाचार्यवचनं यथा' ॥

इति निर्देशानुसारं महात्मना गर्गाचार्येण सुचिन्तितेयं शिक्षा वर्तते इति प्रतिभाति ।

अस्यां शिक्षायामष्टौ खण्डाः सन्ति, तत्र प्रथमे खण्डे नव श्लोकाः, द्वितीये षड् श्लोकाः, तृतीये सप्त श्लोकाः, चतुर्थे नव श्लोकाः, पञ्चमे एकादश श्लोकाः, षष्ठे सप्त श्लोकाः, सप्तमे चतुर्दश श्लोकाः, अष्टमे चैकादश श्लोकाः सन्ति ।

अस्यां शिक्षायामुपर्युक्तेषु श्लोकेषु कम्पस्यानुप्रासिकी चर्चा विद्यते । तद्यथा—

'केन कम्पातितः कम्पः संयोगो येन कम्पते ।
किंवा कम्प इति प्रोक्तो येनासौ कम्प उच्यते' ॥

एवमेव रङ्गस्य स्वरव्यञ्जनभेदाभ्यां द्वैविध्यमुक्तमस्ति । तद्यथा—

'द्विमात्रो मात्रिको वापि नसिमूलं समाश्रितः ।
अन्ते प्रयुज्यते रङ्गः पञ्चमैः सर्वनासिकः' ॥

**माण्डूकी शिक्षा ( अथर्ववेदीया )**—महर्षिणा मण्डूकाचार्येण शिक्षितेयं शिक्षा 'माण्डूकी शिक्षा' निगद्यते । इयं शिक्षा च विशेषतोऽथर्ववेदेन सम्बन्धिता विद्यते । भवेन्नाम सामवेदस्य स्वराणामपि यथाकथञ्चित् चर्चा विद्यते । अस्यां शिक्षायाम् एकाशीत्युत्तरं शतमेकं श्लोकानां संख्या विद्यते । एषु श्लोकेषु द्रुतादिवृत्तीनां साधु लक्षणादिकं निरूपितमस्ति । तथा हि—

'तिस्रो वृत्तयः सुक्रान्ता द्रुतमध्यमविलम्बिता ।
यथानुपूर्वं प्रथमा द्रुता वृत्तिः प्रशस्यते ॥ १ ॥
मध्यमैकतरा वृत्तिहर्यन्तरा हि विलम्बिता ।
नैनां बुधः प्रयुञ्जीत तदीच्छेद् धर्मसम्पदाम्' ॥ २ ॥

अपरञ्च—

'दोषाप्रकाशस्तु विलम्बितायां वर्णा द्रुतायां न तु सूपलक्षाः ।
तस्माद् द्रुतां चैव विलम्बितां च त्यक्त्वा नरो मध्यमया प्रयुञ्ज्यात्' ॥ ५ ॥

अन्यच्च—सामवेदीयस्वराणां विषये महत्त्वपूर्णं वर्णनमस्ति यत्—

'सप्तस्वरास्तु गीयन्ते सामभिः सामगैर्बुधैः ।
चत्वार एव छन्दोभ्यस्त्रयस्तत्र विवर्जिताः ॥ ७ ॥

षड्ज ऋषभगान्धारो मध्यमः पञ्चमस्तथा ।
धैवतश्च निषादश्च स्वराः सप्तेह सामसु' ॥ ८ ॥

एतदतिरिक्तमस्यां शिक्षायां विद्या हानिविद्योच्चयविषये च महत्त्वपूर्णाः सार्वदेशिक्यः सार्वकालिक्यश्च शिक्षा उपदिष्टाः सन्ति । तद्यथा—

काचन शिक्षाः—

'आचार्याः सममिच्छन्ति पदच्छेदन्तु पण्डिताः ।
स्त्रियो मधुरमिच्छन्ति विक्रुष्टमितरे जनाः ॥ १७८ ॥
आचार्योपासनाद्योगात् तपसा प्राज्ञसेवनात् ।
विगृह्य कथनात्कामात् षड्भिर्विद्या प्रपद्यते ॥ १७९ ॥
आलस्यान्मूर्खसंयोगाद् भयाद् रोगनिपीडनात् ।
अत्याशक्त्या च मानाच्च षड्भिर्विद्या विनश्यति' ॥ १८० ॥

अस्याः फलश्रुतिश्च यथा—

'मण्डूकेन कृतां शिक्षां विदुषां बुद्धिदीपिनीम् ।
यो हि तत्त्वेन जानाति ब्रह्मलोकं स गच्छति' ॥ १८१ ॥

**क्रमसन्धानशिक्षा**—विदन्ति सर्वे वैदिका विद्वांसो यत्—यजुर्वेदसंहितायां चत्वारिंशदध्यायाः सन्ति । सैषा संहिता लोके वेदे च सुप्रसिद्धाऽस्ति । भगवतः शिवस्य रुद्राष्टाध्यायी अत्रैव सन्निहिताऽस्ति । तत्र कस्मिन्नध्याये कतिसंख्यकानि क्रमसन्धानानि सन्ति । अथवा कस्मिन् अध्याये क्रमसन्धानाभावो विद्यते, एतत्सर्वमस्यां शिक्षायां निर्दिष्टाऽस्ति । तथा च ग्रन्थकर्त्रा प्रतिज्ञातमस्ति आदावेव—

'यथा समाम्नातङ्क्रमावसानं सङ्क्रमेषु ।
क्रमशास्त्रानुसारेण सन्धानं प्रोच्यतेऽधुना' ॥ १ ॥

क्रमानुसन्धानं यथा अध्यायेषु—प्रथमाध्याये द्विचत्वारिंशत् । एकोनविंशतिर्द्वितीयाध्याये, तृतीयाध्याये त्रीणि, चतुर्थे क्रमसन्धानाभावः, पञ्चमाध्याये सप्त, षष्ठाध्याये क्रमसन्धानाभावः, सप्तमाध्याये द्वे, अष्टमाध्याये क्रमसन्धानाभावः, नवमाध्याये द्वे, दशमाध्याये क्रमसन्धानाभावः, एकादशाध्याये द्वे, द्वादशाध्याये एकम्, त्रयोदशाध्याये चत्वारि, चतुर्दशाध्याये त्रीणि, पञ्चदशाध्यायेऽष्टौ, षोडशसप्तदशाध्यायौ क्रमसन्धानरहितौ, अष्टादशाध्याये द्वे, एकोनविंशतितमाध्याये क्रमसन्धानाभावः । विंशतितमाध्याये चत्वारि, एकविंशतितमाध्याये क्रमसन्धानाभावः । द्वाविंशाध्याये द्वे, त्रयोविंशाध्याये त्रीणि, २४-२५-२६-२७तमाध्यायेषु क्रमसन्धानाभावः, अष्टाविंशाध्याये द्वे, २९-३०-३१-३२-३३-३४-३५—अध्यायेषु क्रमसन्धानाभावः, षड्त्रिंशदध्याये द्वे, सप्तत्रिंशदध्याये द्वे, अष्टात्रिंशाध्याये एकम्, एकोनचत्वारिंशाध्याये क्रमसन्धानाभावः, चत्वारिंशाध्याये क्रमानुसन्धानमेकम् । एवं पञ्चदशाधिकैकशतं क्रमसन्धानानि भवन्ति । इति क्रमसन्धान-शिक्षा ।

**गलदृक् शिक्षा**—गलत् ऋचः शिक्षा—इति गलदृक् शिक्षा कथ्यते । अस्याः शिक्षायाः प्रतिपाद्यविषयोऽस्ति—शुक्लयजुर्वेदसंहिताभागे केष्वध्यायेषु कियत्संख्यकाः

ऋचः गलिताः पथभ्रष्टाः सन्ति—इत्येतस्य समीचीनं विवरणमस्ति । उदाहरणरूपेण प्रस्तूयते यद्येन प्रकारेण संहितायाः षष्ठेऽध्याये प्रथमा ऋग्गलिता विद्यते—रेवतीरमद्ध्वमित्यत्र देवस्य त्वा एवं पञ्चत्रिंशत् । अपो देवा इत्यत्र 'सोमस्य त्विषिरिमं देवा लुप्ता ऋक्' । एतदनुसारेणैव प्रायशः सम्पूर्णायां संहितायां गलितभावापन्नानामृचां निरूपणं प्रकृष्टरूपेण समाचरितमस्ति ।

**मनःस्वार-शिक्षा**—शिक्षा-संग्रहे मध्ये चर्चितेयं शिक्षा यजुर्वेदसंहितया सम्बद्धा वर्तते । उदात्तादीनां विचारस्यैवात्र प्राधान्यं विद्यते । ग्रन्थप्रारम्भे प्रथमश्लोके अस्याः प्रणेतुर्विषये कथितमस्ति यत् पुराकाले इयं शिक्षा ब्रह्मणा निर्मिता पश्चाच्च लोकव्यवहाराय भगवता याज्ञवल्क्येन महर्षिणा भाषिता । तद्यथा तत्र प्रोक्तमस्ति—

'मनःस्वारं प्रवक्ष्यामि ब्रह्मणा निर्मितं पुरा ।
भगवद्याज्ञवल्क्येन भाषितंल्लोकहेतवे' ॥

अस्याः शिक्षायाः प्रारम्भ इत्थं भवति—'अथ त्रिपदा द्विरवसाममध्येऽनुदात्तानि । अथाधिमध्येऽनुदात्तानि भवन्ति' । एवमुदात्तादीनां चतुःषष्टिः ( ६४ ) श्रेणयः सन्ति ।

एवमस्यां शिक्षायां विचारक्रमे संहितायां याः त्रिपदा ऋचः सन्ति तासु कियत्यो अन्तोदात्ताः, कियत्यो मध्योदात्ताः, कियत्यो, काश्च आद्युदात्ताः नकारान्ता तकारान्ता वा तासां कियती संख्या विद्यते । इत्यादि विषयाणां सूक्ष्मतया विश्लेषणपूर्वकं विवरणमस्ति ।

तदित्थं शिक्षासाहित्यस्य यथोपलब्धं विवरणमुपन्यस्तमस्ति । परञ्च शिक्षा-संग्रहे विसर्गाङ्गुलिप्रदर्शनप्रकारः, यजुर्विधानशिक्षा, स्वराष्टकशिक्षा—क्रमकारिका शिक्षा आदि विविधशिक्षासमुच्चयानां वर्णनमुपलभ्यते । एताः शिक्षाः विशेषेण महर्षिणा याज्ञवल्क्येन यजुर्वेदसंहितायाः ग्रन्थिविमोचनाय प्रवर्त्तिताः सन्ति । यथा—प्रातिशाख्यप्रदीपशिक्षायाम् एव विसर्गाङ्गुलिप्रदर्शनप्रकारोऽङ्गभूतोऽस्ति ।

उपर्युक्तानामेतेषां शिक्षाग्रन्थानां सम्यगनुशीलनेन सम्यग्रीत्या प्रतीयते च यत्प्राचीनैर्महर्षिभिः आचार्यैश्च वेदाङ्गभूतायाः शिक्षायाः कीदृशं वैज्ञानिकमध्ययनं कृतमासीत् यदद्यावधि भाषावैज्ञानिका अपि चमत्कृताः सन्तः भूयसीं प्रतिष्ठां तेभ्यो वितरन्ति स्वयं च तेषामग्रे नताः विनताः वा भवन्ति । अद्यापि तेषां यशोवैजयन्ती तत्क्षेत्रे उद्धूयते । साम्प्रतं पाश्चात्यविद्वांसः अपि वर्णोच्चारणविद्यान्तर्गतस्यास्य विषयस्याध्ययनं कुर्वन्ति ।

प्राचीने भारते वर्तमानकालवद् तदुपयुक्तसाधनानामभाव आसीत् । तथापि—अस्य भाषाविज्ञानस्य महत्त्वपूर्णं गवेषणायुतं वर्णनमनुशीलनञ्च प्राचीनानाम् ऋषि-महर्षीणां तपःपूतजीवनस्यैव फलमस्ति । तत्फलञ्चाद्यापि तत्तद्वैदिकसंहितानां मन्त्राणामुच्चारणं तथैव भवति यथा तन्मन्त्राणां दर्शनकाले श्रवणकाले वाऽसीत् । वैदिकविज्ञानानुसारेणोच्चारणस्य परम्परा इयती विशुद्धा वर्तते यत्—आर्यावर्तस्य कस्यापि प्रदेशस्य निवासी वैदिकः अन्यप्रदेशस्थितेनाध्येत्रा समाने स्वरे तन्मन्त्राणामुच्चारणं करोति अहो वैलक्षण्यं शिक्षाशास्त्रस्य । यत्र भारतीयाखण्डतायाः दर्शनं भवति । न तत्र प्रदेशानुशासनं न वा सम्प्रदायविशेषस्य विभिन्नता।

# सामान्या लौकिकी शिक्षा

## शिक्षास्वरूपम्

शिक्षा हि नाम विद्योपादानस्य मूलकारणम्। शिक्षाया मूलधातुरेव 'शिक्ष्' विद्योपादाने इत्यस्ति। परञ्च यथाऽऽधुनिके काले साक्षरा एव शिक्षिता भवन्ति तद्वत् प्राचीनकालेन। तदा तु शिक्षायां चारित्रिक-शिक्षणस्यैव प्राधान्यमासीत्। ज्ञानगरिम्णोऽपि चरित्रमहिमा गरीयानुक्तः। यः केवलं ज्ञानवान् न सः पूर्णो मनुष्यः। स एव ज्येष्ठः श्रेष्ठश्च यो हि ज्ञानेन सह चारित्र्यस्यापि साधकः। यतो हि सच्चारित्र्येणैव मानवजीवनं साफल्यमधिगच्छति। प्राचीने भारतेऽस्यैव चरित्रबलस्य शिक्षा सम्पूर्णे विश्वे—दीयते स्मेति नाविदितं केषाञ्चिदपि विपश्चिदपश्चिमानाम्। यथोक्तं मनुस्मृतौ—

'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः' ॥

आशयोऽयमत्र यद् भारतीयाश्चरित्रवन्त आसन्, अत एवान्यदेशस्था मानवाः स्व-स्वसदाचारपरिपालनरीतिमशिशिक्षन्। तदित्थं प्राचीने भारते शिक्षायाः प्रमुखोद्देशः चारित्र्यप्राप्तिः। अपि च मानवानामाभ्यन्तरिकी या च मौलिकी सत्ता विद्यमाना विद्यते तां परिस्फुटनमेव शिक्षाया लक्षणं लक्ष्यञ्चास्ति। आशयोऽयमत्र यत्पूर्णमानवताप्राप्तिरेव शिक्षेति।

अतस्तद्युगे शिक्षा सैषा कलाऽऽसीद्यया व्यक्तिः, व्यक्त्या समाजः, समाजेन च राष्ट्राभ्युदयनिःश्रेयसयोस्सिद्धिः प्राप्यते स्म। किञ्च सामाजिकदृष्टचा शिक्षा मनुष्याणां प्रारम्भिको विकासः, तस्या इहलोक-परलोकयोश्च कृतेऽतिशायिन्यपेक्षाऽऽसीदिति। एवञ्च कस्यापि देशस्य जनस्य च प्राणदायिनी शिक्षैव भवति। स्वीयसंस्कृतिरहिता शिक्षा नूनं श्रेयसे न कल्पते। वस्तुतः शिक्षा स्वोपादेयगुणेनैवान्वर्थसंज्ञां धत्ते। तदभावे काष्ठमयो हस्तीव निष्प्रयोजनीयतां प्रकटयति।

संक्षेपेणेदमायातं यत्—प्रज्ञापरिष्कारो हि नाम शिक्षायाः प्रधानतममुद्देश्यम्, शक्तेरिच्छा शिक्षा। कर्त्तव्ये कर्मणि शक्तिप्राप्तेरिच्छैव शिक्षा। येषां प्रज्ञापरिष्कृतिः सञ्जायते ते शिक्षिताः। किम्बहुना—यया वयं स्वकर्त्तव्ये निरताः स्याम्, यया च कर्त्तव्यं बोध्यते सैव शिक्षेति—कथयन्ति सुधीवराः।

अपरञ्च—शिक्षाशब्दस्यार्थ एवास्ति प्राणिनामाभ्यन्तरस्थितं ज्ञानं बहिर्विकसनम्। अत एव 'शिक्षा'शब्दस्यांग्लपर्यायः 'एजुकेशन' ( Education ) शब्दः, यस्यार्थ एव भवति—आभ्यन्तरस्य वस्तुनो बाह्यप्रकटनम्। यदि च बाह्यतः किमप्याभ्यन्तरे पातनं शिक्षायाः प्रयोजनं स्याच्चेत् 'एजूकेशन' इत्यस्य स्थाने 'इञ्जेक्सन' शब्दस्य प्रयोगो भवेत्।

अत्रेदं तात्पर्यं यत्प्राक्तने काले शिक्षा-प्रणाल्युद्देश्यं यन्मनुष्याणामीश्वरप्रदत्तशक्तीनां सम्यग्विकासैस्तं वास्तविकेऽर्थे मानवत्वप्राप्तिः आसीद्यया सर्वतोभावेन जीवनदर्शनस्य ज्ञानं भवदासीत्। अत एव प्राचीन( वैदिकयुगीन )शिक्षा-पद्धतौ न केवलमर्थार्जनमेव

लक्ष्यमपि तु मानसिकः ( शारीरिकः ) बौद्धिकः आत्मिकश्च विकास एव शिक्षाया मुख्यं लक्ष्यमासीत् । तथा च यया शिक्षयाऽऽत्मा पूर्णोन्नतो भवेत्, यया च स्थूल-सूक्ष्म-कारणशरीराणि पूर्णतामाप्नुयुः सैवादर्शशिक्षा प्राचीनैः परिगण्यते ।

एवमेव बौद्धकाले जातकयुगेऽपि शिक्षाया आदर्शस्थितिः आसीत् । विशेषतो तद्युगे शिक्षाया लक्ष्यं विषयज्ञानार्जनमेव नासीत् । शिक्षा जीवनमयी भवति स्म । जीवनस्य प्रत्येकाङ्गं सबलं रचयति स्मेति कृत्वा योग्यसामाजिकनिर्माणाय शिक्षा दीयते स्म ।

अत्रायं निष्कर्षः समीचीनः प्रतिभाति यत्—'माण्टेनोऽवदद्यत् यदि शिक्षयाऽस्माकमुन्नतं मानसं, सुस्थिरश्च विवेको न भवति तदा तेन पाण्डित्येन वरं यत् हस्तकन्दुके ( टेनिशे ) कौशलं लभे'दित्यत्र प्राचीनाः भारतीयाः मतेनानेन पूर्णतया सहमता आसन् इति ।

अत एव यथार्थं तत्स्वरूपं निर्धारितं प्राचीनैः शिक्षा-शास्त्रिभिः, तद्यथा—

'शिक्षा शुभ्राऽभयकरा ज्ञानमुद्रासमन्विता ।
अक्षसूत्रा सकुण्डा च द्विभुजा दण्डपङ्कजा' ।।

अत्रायं भावः—स्वरूपे शुभ्रेत्यनेन 'श्वेतवर्णा समुद्दिष्टा' इति तात्पर्यार्थः, तेन स्वयं शिक्षा परानपि अज्ञानान्धकारात् प्रमुच्य श्वेतं ज्ञानं प्रददाति । तथा च 'अभय-ज्ञानदात्री' इत्युक्ता । सङ्क्षेपेण शिक्षा 'गायत्री-स्वरूपिणी' अत एव निर्मलबुद्धि-दायिनी सा ।

## शिक्षाशब्दप्रयोगः

आधुनिककालवत् प्राचीनकालेऽपि शिक्षाविद्भिर्भारतीयैः 'शिक्षा'शब्दप्रयोगो विस्तृत-सङ्कुचितयोः अर्थयोः कृतः । तत्र विस्तृतार्थे सर्वांशेन स्वात्मानं सुसंस्कृती-करणमेव 'शिक्षा', सङ्कुचितार्थे च—आजीविकाप्राप्तिपूर्वकम् अध्ययनम् । तेन विस्तृतार्थे शिक्षा प्रकाशिकोक्ता । अतः शिक्षा प्रकाशस्य तत् स्रोतः यज्जीवने सन्मार्ग-प्रदर्शकम् । विचारकस्य एकस्य कथनमस्ति यत् शिक्षोद्भूतं ज्ञानं मनुष्यस्य तृतीयं नेत्रं येन समस्तजीवनोपयोगि-तत्त्वानामधिगमो भवति । उक्तञ्च—

'ज्ञानं तृतीयं मनुजस्य नेत्रं समस्ततत्त्वार्थविलोकिदक्षम् ।
तेजोऽनपेक्षं विगतान्तरायं प्रवृत्तिमत् सर्वजगत्त्रयेऽपि' ।।

अत एव महाभारतेऽप्युक्तम्—

'नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः' ।

तथैव मुक्तिहेतुः अपि विद्यैवोक्ता, यथा हि—'सा विद्या या विमुक्तये' ।

अन्यच्च—विद्यया = शिक्षया वा यज्ज्योतिः प्राप्यते तत् सर्वसंशयोच्छेदनकारक-मनागतविषयोद्बोधकञ्च मतम् । येन शिक्षा नाधिगता सोऽन्ध इव कथितः । तथा चोक्तम्—

'अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः' ॥

किम्बहुना विद्या कल्पलतेव सर्वदिक्षु हितकारिणी मता । तथा हि—

'मातेव रक्षति पितेव हिते नियुङ्क्ते कान्तेव चापि रमयत्यपनीय खेदम् ।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं किं किं न साधयति कल्पलतेव विद्या' ॥

इत्थं प्राचीनकाले विद्या इहलोक-परलोकयोः पुरुषार्थचतुष्टयस्य च साधिकोक्ता । सा च द्विविधे । यथोक्तं मुण्डके—द्वे विद्ये वेदितव्ये परा चैवापरा च । तत्रापरा—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते । परस्परे मिलित्वैव पूर्णा भवति । अतः उभयोर्विद्ययोर्यथावकाशं शिक्षा ग्रहीतव्या ।

## वैदिकी शिक्षाप्रयोगः

शिक्षाशब्दस्य प्रयोगो विद्योपादानार्थं केवलं लौकिके संस्कृते एव नापितु वेदेष्वप्युपलभ्यते । यथा हि ऋग्वेद-सामवेदयोः अधोलिखितेषु मन्त्रेषु—

'शिक्षा ण इन्द्र राय आ पुरु विद्वां ऋचीषम अवानः पार्ये धने'[1] ।

अत्रेन्द्रं सम्बोध्य कथितमस्ति—यत् त्वं धनमादाय मां ज्ञानं देहि—इति, तथा च शत्रुभ्यो धनमाहृत्य तेन संरक्षणं कुरु ।

अपि च प्राचीनशिक्षायाः सुस्पष्टं निदर्शनमुपलभ्यते यजुर्वेदे—यत्र कन्यकाभ्यः कुमारेभ्यश्च शिक्षणार्थं वस्वादयो विद्वांसः प्रार्थ्यन्ते—

'वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वद् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वत् । विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदिन्द्रस्त्वा धूपयन्तु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु'[2] ।

अत्र धूपयन्तु=धूप भाषार्थः ( चुरादिः ) । सुगन्धितान्नादिभिः विद्या-सुशिक्षाभ्यां, सत्यव्यवहारग्रहणेन, राजविद्यया, राजनीत्या संस्कुर्वन्तु, इति दयानन्दर्षिः । अन्यासां शिक्षाणान्तु वेदेषु उल्लेखाः सन्त्येव, शारीरिकीं शिक्षामधिकृत्यापि महान्तो महनीया विचारा मन्त्रद्रष्टारो ऋषयोऽकुर्वन् । तेषु केचन यथा—

'इदं वपुर्निर्वचनं जनासश्चरन्ति यन्नद्यस्तस्थुरापः ।
द्वे यदीं विभृतो मातुरन्ये इहेह जाते यम्या सबन्धू' ॥[3]

सूक्तेऽस्मिन् कथितमस्ति यदिदं शरीरं मनन-श्रवणयोर्योग्यमस्ति । यथा पृथिव्यां नद्यः प्रवहन्ति तद्वच्छरीरे नाड्यः सिञ्चनार्थं तिष्ठन्ति, सिञ्चनेन च शारीरिकी स्फूर्तिर्जायते । तथैवान्यत्र मरुद्गणमभिलक्ष्य सम्बोधितं यद्यूयं शरीरे बलमाधानाय सान्नम् आगच्छन्तु । वयं येन अन्नं बलं दानबुद्धिश्च प्राप्नुमः । यथोक्तञ्च—

१. ऋग्वेद० ८।९२।९, साम उत्तरार्चिक १७।३।१० ।
२. यजुर्वेद ११।६० । ३. ऋग्वेद ५।४।४७।५ ।

'एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयां विधामेषं वृजनं जीरदानुम्'[१] ॥

एवमेवाथर्ववेदस्यैकस्मिन् सूक्ते शरीरमेव सर्वकार्यभूतं प्रतिपादितमतः शारीरिकी-शिक्षाप्राप्त्यै शरीरसंरक्षणमावश्यकमिति । यथा हि—

'व्रजं कृणुध्वं स हि वो नृपाणो वर्मा सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा भावः सुस्रोच्चमसो दृंहता तम्'[२] ॥

अत्रेन्द्रियेभ्यः शिक्षा दीयते यच्छरीरं परिपालय यतो हि तस्मादेव युष्माकं रक्षणं भवति । उपर्युक्तभावाभिप्रायं यजुर्वेदेऽपि शरीरमधिकृत्य कथितमस्ति । यथा वा—

'तव शरीरं पतयिष्णवर्वन्तवचित्तं वात इव ध्रजीमान् ।
तव शृङ्गाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणां चरन्ति' ॥

अय शिक्षणे वीरपुरुषमभिलक्ष्य कथ्यते यत् त्वच्छरीरं वेगगमने समर्थः स्यादिति । तथैव सैनिकाः देशरक्षणे निरन्तरं सन्नद्धा स्युः इति । एवं वेदेष्वनेकत्र शिक्षणस्य चर्चोपलभ्यते ।

## शिक्षाभेदाः

प्राचीनकाले गुरुकुलप्रणालि-शिक्षायां ब्रह्मचारिणां दण्डधारणस्य या व्यवस्था आसीत् साप्यात्मरक्षार्थं एव । ते यष्टिसञ्चालनं प्रत्यहं कुर्वन्ति स्म । तथैव बलवच्छ-रीरकामेभ्यो ब्रह्मचारिभ्यो नित्यं प्रातःकाले प्राणायाम-सूर्यनमस्कारौ आवश्यकौ आस्ताम् ।

अत्रेदं तात्पर्यं यच्छिक्षाऽन्तर्ज्योतिनिदर्शकस्य ज्ञानस्य शक्तिप्राप्तेश्च स्रोतः । अपि च यया शारीरिकी, मानसिकी, बौद्धिकी, आत्मिकी च शक्तिः प्राप्यते । रामायण-काले तु व्यावहारिकी नैतिकी चापि शिक्षे दीयते स्म ।

## शिक्षाया अधिग्रहणम्

प्राचीनभारतीयशिक्षाया अधिगमस्त्रेधा विभक्तोऽस्ति । मातृ-पितृ-आचार्यप्रभावैः । मातुः उदरे नवमासपर्यन्तं न केवलं शरीराकृतेः परिवर्धनं पुष्टिर्वा भवत्यपि तु तत्र प्राथमिकी शिक्षा अपि संसर्गरूपेण बालको बालिका वा गृह्णाति स्म । माता तस्मिन् काले यथा चरति तथा तत्प्रभावः गर्भस्थे शिशौ पतति । अपि च जन्मग्रहणानन्तरं न्यूनातिन्यूनं पञ्चवर्षं यावत्तु मातुः शिक्षयैव बालः स्वकर्त्तव्ये कर्मणि नियुक्तो भवति । अत एव प्राचीनैर्महर्षिभिः मातुः गौरवं सर्वातिशायित्वं प्रत्यपादि । तद्यथा गौतमीये धर्मसूत्रे—

'आचार्यः श्रेष्ठो गुरूणां ( पित्रादीनां ) मातेत्येके' ।

---

१. ऋग्वेद १।२३।१६६।१५ ।     २. अथर्व० १९।७।५८।४ ।

तत्रैव महर्षिवशिष्ठमतेन तु—

'उपाध्यायाद्दशाचार्य आचार्याणां शतं पिता ।
पितुर्दशगुणं माता गौरवेणातिरिच्यते' ॥

एवं मातुः गौरवेण बालानां शारीरिकशिक्षा पञ्चवर्षं यावदन्तमवश्यमेव मिलति स्म । अनन्तरमुपनीते सति—अनुपनीते वा पितुः सकाशादेव शिक्षाया विनियोगः । तथा च प्रारम्भिकः शिक्षकोऽपि पितैव, पितुः अनन्तरम् आचार्यश्च ज्ञानोपदेष्टा मतः । किं बहुनोक्तेनेत्यस्मिन् विषये 'अशिक्षितास्त्रं पितुरेव मन्त्रवद्' इत्युदाहरणं रघोः सुप्रसिद्धमेव । वस्तुतस्तु शिक्षाया आरम्भः उपनयनानन्तरमेव भवति स्म । यतो हि—आपस्तम्बधर्मसूत्रे—

'उपनयनं विद्यार्थस्य श्रुतितस्संस्कारः' । इत्युक्तम् ।

अत एवोपनयनेन संस्कृतत्वात् सर्वविद्याधिगमने सुगमो मार्गः । अनुपनीतानान्तु शिक्षाधिग्रहणे निषेध एव । अत्रेदं कारणं यत् यथा संस्कृते वस्तुन्यप्रभावः सहसा न निपतति तद्वच्छिक्षायामपि । ब्राह्मणादित्रैवर्णिकानां शुद्धिः संस्कारेणैव भवति । संस्काराभावे तेऽपि शूद्राः, अर्थात्—असंस्कृता एव भवन्ति । उक्तञ्च—

'जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते'[1] ।

एतेनेदमप्यायातं यच्छूद्राणामपि यदि संस्कारो भवेत्तदा तेऽपि शिक्षाऽधिगमे इतोऽप्यधिकं साफल्यं प्राप्तुं शक्नुवन्ति । गौतमधर्मसूत्रे 'उपनयनं द्वितीयं जन्म' इति प्रतिपाद्य द्विजन्मत्वसिद्धिः उक्ता । यथा—

'तदुपनयनं द्वितीयं जन्म[2] । यतो हि शरीरमेव मातापितरौ जनयतः'[3] ।

अत्रास्य माता सावित्री, पिता त्वाचार्यः । तेन द्विजन्मत्वसिद्धिः । उपनयनावस्था-कालश्च साधारणेन नियमेन—

## शिक्षाकालः

गर्भाष्टमेऽब्दे ब्राह्मणस्य, एकादशेऽब्दे क्षत्रियस्य द्वादशे च वैश्यस्योक्ताः[4] ।

विशेषप्रयोजनवशेन च—

नवमे पञ्चमे वा काम्यम्[5] । एतदेव मनुना व्याख्यातं यत्—

'ब्रह्मवर्चसकामस्य कुर्याद् विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे'[6] ॥

---

१. मनु० ।

२. गौतमधर्मं० १।१।९ ।

३. आपस्तम्ब० १।१।१।१८ ।

४. तत्रैव १।१।१।१९ ।

५. गौतम० १।१।७ ।

६. मनु० २।३७ ।

अन्यत्र च—

सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्कामं, नवमे तेजस्कामं, दशमेऽन्नाद्यकामं, एकादशे इन्द्रियकामं, द्वादशे पशुकामम्[1]।

इत्याद्युदाहरणैः सिद्ध्यति यत्—प्राचीने काले आध्यात्मिक्याः, शारीरिक्याः आर्थिक्याश्च शिक्षायाः प्रारम्भकालः पञ्चमाद् वर्षादारभ्य द्वादशवर्षं यावदिति। तथा चोपनयनकालविशेषे—

'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यमित्युक्तम्'[2]।

एतदुपनयनञ्च नान्यत् किञ्चिद् बुद्धेः संस्कार एवोपनयनम्। शिक्षाप्राप्तौ च बुद्धि-संस्कृतानामेव प्रवेशः। बुद्धिसंस्काराय गायत्र्याः सावित्र्याः वा स्मृतिः (स्मरणं) नितान्तमपेक्षिताऽऽसीत्। कालातिक्रमे सति सावित्र्यपि संस्कर्त्तुं विरता भवति। तदुक्तं गौतमधर्मसूत्रे—

'आषोडशाद् ब्राह्मणस्यापतिता सावित्री[3]।
द्वाविंशते राजन्यस्य द्व्यधिकाया वैश्यस्य'[4]॥

तथैव मनुरप्याह—

'आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते।
आद्वाविंशतेः क्षत्रियस्य आचतुर्विंशतेर्विशः'[5]॥

इत्येवमुपनयनस्यैव नहि शिक्षाप्राप्तेः श्रीगणेशस्यापि परमं वयः। अतः यथा-कालमुपनीतशिष्यो व्रतबन्धपुरस्सरमाचार्यं प्रत्युपेत्य सकल्पं सरहस्यं वेदविज्ञानं गृह्णाति स्म।

## आचार्यादीनां लक्षणानि

आधुनिके काले यथा आचार्याणां सङ्कुचिता व्याख्या तथा प्राचीने भारते न।

तदा तु—उपनीय कृत्स्नं वेदमध्यापयेत् स आचार्यः।

अपि च—यस्मात् धर्मान् आचिनोति स आचार्यः।

अत्र धर्मशब्दः कर्त्तव्यतावचन इत्युक्तम्। ······कर्त्तव्यञ्च दृष्टार्थं षाड्गुण्यादि। अदृष्टार्थमग्निहोत्रादि।

उपर्युक्तयोः एतयोः लक्षणयोरेव विशिष्टं व्याख्यानं स्मृति-पुराणयोः उपलभ्यते। यथोक्तमुभयत्र—

'उपनीय तु यः शिष्य वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते'॥

सकल्प-सरहस्याभ्यां वैदिक-कर्मकाण्डानुष्ठानधनुर्वेदोक्तास्त्रविशेषयोः ग्रहणम्। तेन प्रायोगिकशिक्षणमप्याचार्यकर्त्तव्यताधीनमिति सिद्ध्यति।

---

१. आपस्तम्ब० १।१।१।२१-२५। २. तत्रैव १।१।१।१९।
३. गौतमधर्म० १।१।१३। ४. तत्रैव १।१।१४।
५. मनु० २।३८।

एतावन्मात्रमेव न, ज्ञानयज्ञस्याद्योऽरणिः । यज्ञे यथा अग्नेः उत्पत्तिः द्वयोः काष्ठयोः घर्षणेनैव भवति, तद्वत् आचार्यं आद्योऽरणिः अन्तेवासी चोत्तरारणिः ।

अत्राचार्यस्य प्रवचनमेव सन्धानं तेनान्तेवासी विद्यासन्धि सुखावहां प्राप्य नितरां प्रमोदते । अत एव—उपनिषदि अधिविद्यव्याख्यायाम् आचार्यः पूर्वरूपम्, अन्तेवासी उत्तररूपं, विद्यासन्धिः प्रवचनं सन्धानमिति प्रतिपादितम्[१] ।

किञ्च जैनागमसूत्रेषु त्रिविधानाम् आचार्याणाम् उल्लेखो मिलति । यथा—कलाचार्यः, शिल्पाचार्यः धर्माचार्यश्चेति[२] ।

एवं प्राचीनशिक्षायाम् आचार्यस्य महत्त्वपूर्णं विशिष्टञ्च स्थानमासीत् । परञ्च तस्मादप्युत्कृष्टतरं स्थानं प्राचार्यस्य । आचार्यस्य समीपे प्राचार्ये समागते पूर्वं प्राचार्यस्यैवाभिनन्दनम् । तदित्थम् उक्तम् आपस्तम्बधर्मसूत्रे—'आचार्य-प्राचार्य-सन्निपाते प्राचार्याय—उपसङ्गृह्य उपसञ्जिघृक्षेद् आचार्यम्'[३] ।

यथा प्राचार्यसमीपे आचार्यः पदेन न्यूनस्तद्वद् उपाध्यायः आचार्यान्न्यूनः । यत्राचार्यः सकल्पान् सरहस्यान् वेदान् अध्यापयति, तत्र उपाध्यायः श्रुतेः एकदेशमेव अध्यापयति । अतः उपाध्यायः उपशिक्षकः । पुराकाले तल्लक्षणं यथा—

'योऽध्यापयेकदेशं श्रुतेरङ्गान्यथापि वा ।
वृत्त्यर्थं स उपाध्यायो विद्वद्भिः परिगीयते'[४] ॥

एतदेव सूत्ररूपेण वाशिष्ठधर्मशास्त्रेऽप्युक्तम्—

'यस्त्वेकदेशं स उपाध्यायः'[५] ।

अत्र मनूक्तोपाध्यायलक्षणे यत् वृत्त्यर्थमिति विशिष्योक्तमेतस्य निन्दा प्राचीनकालेऽप्यासीदिति निम्नाङ्कितेन कालिदासपद्येन ज्ञायते ।

'यस्यागमः केवलजीविकायै तं ज्ञानपण्यं वणिजं वदन्ति'[६] ।

## अन्तेवासी-धर्मः

प्राचीनभारतीयशिक्षायां छात्राणामन्तेवासिनां जीवनं तपस्वितुल्यं भवति स्म । यतो हि छात्राणामध्ययनं तप इत्युच्यते । तेषां जीवनसरणिः एव एतादृशी निर्मिता यया शिक्षा स्वत एव—अनायासेन उपलभ्यते स्म । रात्रौ ब्राह्मे मुहूर्त्ते उत्थाय पठनानन्तरं पुनः शयनं निषिद्धमासीत् । यथोक्तं गौतमधर्मसूत्रे—

न चापररात्रमधीत्य पुनः प्रतिसंविशेत्[७] ।

---

१. तैत्तिरीयोपनिषद्—शिक्षोपनिषद् तृतीय अनुवाक् ।

२. जैनागमसाहित्ये भारतीयसंस्कृतिः, चतुर्थखण्ड, चतुर्थ अ० पृ० २८६ ।

३. आपस्तम्ब० १।२।८।१९ ।

४, स्कन्द० काशी ३।५४ । पादान्तरेण मनुस्मृतावपि २।१४१ ।

५. वाशिष्ठधर्म० ३।२२ ।

६. मालविकाग्निमित्र १।१७ ।

७. गौतमधर्मसूत्र १०।८०।३९–४२ ।

सूर्योदयानन्तरं यदि कोऽपि ब्रह्मचारी शयान एवास्ति तदा असौ अहोरात्रं यावद् दण्डभाग् भविष्यति । तदुक्तं हि—

सूर्याभ्युदितो ब्रह्मचारी तिष्ठेदहरहंभुञ्जानोऽभ्यस्तमितश्च रात्रिं जपन् सावित्रीम्[1] । इत्थं सूर्योदयात्पूर्वमेवोत्थानेन स्वास्थ्याय महाँल्लाभः । छात्रेभ्यः प्रत्याह्निकं कर्त्तव्ये कर्मण्यास्ताम् 'अग्नीन्धनभैक्षचरणे' प्रत्यह हवनार्थं दूरात् समिदानयने व्यायामलाभः । भैक्षचरणार्थञ्च भ्रमणेनापि जङ्घयोर्जव' इत्युपलब्धिः । बौधायनधर्मसूत्रस्यैकस्मिन् सूत्रे धावनक्रियायाश्चर्चितत्वादिति ज्ञायते यदध्यापकाः कादाचित्करूपेण धावन्ति स्म अत एव छात्रा अपि अनुधावन्ति स्म ।

इत्थं भारते पुरा या शिक्षा प्रचलिता आसीत् सा निश्चयेन प्राचीनभारतीय-संस्कृति-परिपुष्टाऽऽसीत् । तस्मात्तदानीं शिक्षाया गौरवपूर्णं सर्वाधिकं महत्त्वं सुप्रतिष्ठितमासीत् ।

---

१. गौतमधर्म० ३।१।२१ ।

# कल्पः

## हस्तौ कल्पोऽथ पठ्यते

विपुले वेदाङ्गसाहित्ये कल्पस्य द्वितीयं स्थानमस्ति। क्वचिच्चेतिहासे तृतीयस्थाने कल्पितोऽयं कल्पः। एष शब्दः कमपि विशिष्टमर्थं व्यनक्ति प्रतिपादयति वा। अत एव कल्पस्य वैदिकसाहित्येऽतिशयं महत्त्वपूर्णं स्थानमस्ति। कल्पप्रयोजनीयताया आवश्यकता तदा अनुभूता, यदा शतपथादिब्राह्मणग्रन्थेषु यज्ञ-यागादीनां कर्मकाण्डीयव्यवस्थायां विस्तृततया तद्व्यवहारे काठिन्यस्यानुभूतिर्जायते स्म। तत्पूर्त्यै च कल्पसूत्राणां प्रतिशाखायां रचना सुसम्पन्ना। तद्युगस्य प्रवर्तितं पद्धत्यनुरूपं तद्रचना सूत्रात्मिकाऽभूत्। ऋग्वेदप्रातिशाख्ये वर्गद्वयवृत्तौ कल्पविषये कथितमस्ति यत्—'कल्पो वेदविहितानां कर्मणामानुपूर्वेण कल्पना शास्त्रम्'। अत्रायं निष्कर्षो विद्यते यत् येषां यज्ञयागादिविहितानां विवाहोपनयनादिकर्मणाञ्च महत्त्वपूर्णं प्रतिपादनं वैदिकग्रन्थेषु कृतमस्ति तेषां सूत्रग्रन्थानामभिधानमस्ति कल्पः। इमानि सूत्राणि प्राचीनतमानि एतदर्थं मन्यन्ते, यतो हि एतानि स्व-स्वविषयप्रतिपादने ब्राह्मणारण्यकैस्सह तैरन्तर्येण सम्बद्धानि सन्ति। ऐतरेयारण्यके तद्वचनानामस्तित्वं विद्यते। अत एव ऐतिहासिकानां स्पष्टं मतमस्ति यत् कल्पग्रन्थाः वेदाङ्गसाहित्यस्य प्राचीनतमाः ग्रन्थास्सन्ति। केचन विद्वांसः कल्पग्रन्थान् वैदिकसाहित्यस्य निकटतमान् मन्यन्ते, परञ्च वेदा अपौरुषेया वेदाङ्गानि च पुरुषकृतानि सन्ति तदा तयोः सामानाधिकरण्यं कथं स्यात्। परञ्चैतत् त्ववश्यमेवास्ति यत्—कल्पग्रन्था वेदाङ्गस्य प्राचीनतमा ग्रन्थास्सन्ति।

**कल्पसूत्रस्य व्युत्पत्तिर्व्यापकत्वञ्च**—सामान्यनियमानुसारेण कल्पस्य सूत्रस्य चानयोर्द्वयोः शब्दयोः संयोगात् कल्पसूत्रस्य संरचना जायते। कल्पोऽयं विलक्षणः शब्दः, अयञ्च कमपि विशिष्टमर्थं प्रतिपादयति। स च विलक्षणोऽर्थोऽस्ति—विधेः, नियमस्य, न्यायस्य, कर्मणः आदेशस्य च प्रयुक्तेऽर्थे परिव्याप्तिः। अनेनैव प्रकारेण 'सूत्रम्' शब्दस्यापि विशिष्टार्थो भवति सङ्क्षेपः। सङ्क्षिप्तविधिमेवाश्रित्य 'सूत्रम्' इति शब्दः प्रवर्तते। सूत्र् धातोः अच् प्रत्यये कृते सति सूत्रमिति शब्दस्य व्युत्पत्तिर्भवति—किं गुणात्मकमिदमिति जिज्ञासायामाह—

'स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः'॥

**अत्रायमाशयः**—उपर्युक्तेन सूत्रलक्षणेन विज्ञायते यत्—धर्मशास्त्रीयविधिविधानानां, कर्मानुष्ठानानां, नीतिनियमानां, व्यवहृत-व्यवहाराणां धर्मस्य प्रवर्तनानाञ्च सङ्क्षेपतमं, सारयुतं, संशीतिरहितं कल्पसूत्रस्य विवेचनमिति।

**अपरञ्च कल्पसूत्रस्य वैशिष्ट्यम्**—वेदविदां मते न केवलं विषयदृष्ट्या अपि तु

नव-नवानां युगानां निर्माणदृष्टयाऽपि संस्कृतवाङ्मये कल्पसूत्राणां स्वानुकूलं विशिष्टं स्थानमस्ति । कल्पसूत्रेभ्यो लौकिकसंस्कृताभ्युदयस्य प्रकर्षः ज्ञायते ।

अन्यच्चोत्तरवैदिके युगे विभिन्नविषयाणां ये सहस्रशो ग्रन्था विरचितास्तेषां प्रेरणादायका उत्साहवर्द्धकाश्चेमे सूत्रग्रन्थाः सन्ति ।

**सूत्ररचनाया उद्देश्यम्**—वैदिकवाङ्मयस्येतिहासे कल्पसूत्राणामाविर्भावो नव्य-युगस्य सूत्रपात इव लक्ष्यते । एतदपि विशिष्टमुद्देश्यमासीद्यत्—प्राक्तने वैदिके युगे तत्साहित्यस्य विस्तरत्वात्, दुर्गमत्वात् रहस्यमयत्वाच्च यथास्थितिबोधने दुस्तरं कार्यमासीत् । तत्काठिन्यमपनोदायैव सूत्रसरणेः आविर्भावः । तेभ्यो वैदिकविधीनां कण्ठस्थीकरणं सौविध्यमभवत् । वैशिष्टयञ्चैषां न्यूनातिन्यूनशब्देषु—अधिकादधिकं भावप्रकटनमस्ति । तथाहि—भावस्य, भाषायाः, विचारस्य, शैल्याः, रचनाविधानस्य च दृष्टयाऽपि परिवर्तनं दरीदृश्यते' ।

**कल्पसूत्रस्य मुख्यो विषयः**— कल्पसूत्राणामुपयोगिताया अनेकत्र चर्चा विद्यते सा तु तथैवास्ति, परञ्च वैदिककर्मणां प्रतिपादनं संस्काराणां व्याख्यानं यज्ञानाञ्च विधानवर्णनं प्राधान्यरूपेण विवेचनं तत्र विद्यते ।

यज्ञादीनां वैशिष्टयस्य प्रतिपादनं वेदेभ्यो ब्राह्मणेभ्यश्चोपलभ्यते । तत्राथर्ववेदे 'अयं यज्ञो भुवनस्य नाभिः'[1] इति प्रतिपाद्य जगतः समुत्पत्तिस्थानं यज्ञ एवेति सुनिश्चितम् । इत्येव नहि ततोऽग्रे विद्यते—'तं यज्ञं बर्हिषि प्रोक्षन् पुरुषं जातमग्रतः'[2] । अत्र तपोभिः पवित्रिताचरणैर्महर्षिभिः स्वात्मभिः यज्ञः समुद्भावितः । एतत्सर्वं यज्ञविषयजातं कल्पसूत्रेषु प्रतिष्ठितमस्ति ।

**अत्रायं निष्कर्षः**—प्राचीनकालादारभ्याधुनापर्यन्तं कल्पसूत्रस्येमे ग्रन्थाः कर्मकाण्ड-जुषां सामाजिकानां सात्त्विकजीवनस्य परिचायकाः सन्ति । न केवलं तत्र कर्मकाण्ड-सरणिरेव विद्यतेऽपितु तेषु महत्सु ग्रन्थेषु जीवनस्य चरमोत्कर्षाभ्युन्नतेरुपाया अपि विद्यन्ते ।

तेष्वेकतस्तु जीवनसरणिमधिकृत्यानेके नियमा वर्णितास्सन्ति । अन्यतश्च कुशाग्र-शेमुषीनां प्राच्यविद्याप्रवर्तकानां धीमतां मेधाशक्तेः परिचायकाः सन्ति ।

## कल्पसूत्राणां भेदास्तेषां विषयविभागश्च

कल्पसूत्राणां मुख्यतस्त्रयो भेदा भवन्ति । केषाञ्चन मते चतुर्भेदा भवन्ति । ते शुल्वसूत्रमपि कल्पसूत्रेष्वेव मन्यन्ते । उपर्युक्तेषु त्रिषु भेदेष्विमे सन्ति—श्रौतसूत्रम्, गृह्यसूत्रम्, धर्मसूत्रञ्चेति । शुल्वसूत्रे ज्यामित्यादि विज्ञानसमन्वितत्वात् पृथगेव निर्वचनम् ।

**तत्र श्रौतसूत्रस्य व्यापकत्वं कार्यक्षेत्रञ्च**—वैदिकसनातनधर्मे कल्पसूत्राणां महन्महत्त्वं विद्यते । वेदोक्ते कर्मकाण्डे सनातनहिन्दूसमाजस्य सुदीर्घकालात् नैष्ठिक-

---

१. अथर्ववेद १०।९०।८ ।

२. तत्रैव १०।९०।९ ।

भावेन सुदृढो विश्वासः प्रचलति। यद्यपि श्रौतसूत्राणि शतपथ-ताण्डच-गोपथादि-ब्राह्मणेषु वर्णितानां कर्मकाण्ड-विधानानामेव निर्देशाः सन्ति, परञ्च तानि श्रौतसूत्राणि ब्राह्मणग्रन्थानां वैदिकसाहित्यस्य च मध्ये न स्वीकुर्वन्ति वैदिकाः। वैदिकसंहितासु वर्णितानि यानि यज्ञ-यागादिविधानानि सन्ति तानि श्रौतसूत्रेषु साररूपेण सङ्कलितानि सन्ति। तेषां मुख्यं कार्यं वैदिकहविर्विधानस्य सोमयज्ञस्य च धार्मिकानुष्ठानानां प्रतिपादनमस्ति। अत्रायं निर्गलितो विषयो यत् श्रौतसूत्रेषु श्रुतिप्रोक्तानां चतुर्दश-यज्ञानां प्रधानतया कर्त्तव्यविधानमस्ति। येषु च मन्तान्तरेण ब्राह्मणग्रन्थवर्णितानाम् अग्नौ विहित-विधीयमानानां च यज्ञ-यागाद्यनुष्ठानानां वर्णनं विद्योतते। तथा चेमे यागाः सन्ति तत्र—दर्शः, पौर्णमासः, पिण्डपितृयागः, आग्रयणेष्टिः, चातुर्मास्यः, निरूढपशुः, सोमयागः, सत्रः (द्वादशदिवसेषु समापनीयो द्वादशसुत्या युक्तो यागविशेषः), गवामयनम् (वर्षपर्यन्तं विधीयमानो यागः), वाजपेयः, राजसूयः, सौत्रामणी, अश्वमेधयागः, पुरुषमेधः, एकाहयागः, अहीनयागश्च इत्येते वर्णिताः सन्ति।

यतः अग्नि-स्थापनानन्तरमेव यागविधानं प्रवर्तते, अतः अग्निचयनस्य तथा कदाचित् पुनराधानस्य वर्णनमपि श्रौतसूत्रेषु नितान्तमावश्यकमस्ति। यागानां नामगणनामेवावलोक्यैवानुमीयते यदेषां श्रौतसूत्राणां विषयो दुरवगाहो विद्यते। यद्यप्यत्र सर्वसाधारणजनेभ्यो नास्ति कस्याप्याकर्षणस्य विषयः, परञ्च धार्मिकदृष्टचा तु तेषां महनीयत्वमस्त्येव।

साम्प्रतं विपरीते काले श्रौतयागानां विधानं क्वाचित्करूपेणैव दृश्यते तदा वयमेषां श्रौतसूत्राणामनुशीलनेनैव तद्युगस्य धार्मिकीं स्थितिं व्यवहारं वा ज्ञास्यामः। अपि च कदापि काले उज्जीवनं भवेदेतेषाम्। आश्वलायन-शाङ्खायनेति श्रौतसूत्रद्वयमस्ति ऋग्वेदस्य।

ययोः यागाद्यनुष्ठानस्य सविशेषलक्षणपुरस्सरं प्रतिपादनमस्ति। अपि चात्र—पुरोऽनुवाक्यायाः याज्यायाः तत्तच्छास्त्राणामनुष्ठानप्रकारस्य च वर्णनं विद्यते। देश-काल-पात्र-प्रायश्चित्तादीनां सविशेषरूपेण विधानमस्त्यत्र।

आश्वलायनश्रौतसूत्रे द्वादशाध्यायाः सन्ति। इयं प्रसिद्धिर्वर्तते यदाश्वलायन ऋषिः शौनक ऋषेः शिष्य आसीत्—तथा च ऐतरेयारण्यकस्याध्यायद्वयस्य रचना गुरु-शिष्याभ्यां समवेतरूपेण कृताऽऽसीत्। शाङ्खायन-श्रौतसूत्रञ्चाष्टादशाध्यायेषु विभक्तं विविध-यज्ञ-यागादीनां प्रतिपादकमस्ति।

शाङ्खायनब्राह्मणेन सम्पृक्तं श्रौतसूत्रमिदं सर्वतोभावेन प्राचीनतरं प्रतीयते। एवञ्च ब्राह्मणग्रन्थैः सह केष्वप्यंशेषु साम्यं बिभर्ति। अस्याष्टादशाध्यायेषु चरममध्यायद्वयपश्चाद् ग्रथितमिव प्रतिभाति। तावध्यायावारण्यकस्य कौषीतक्याः समानौ स्तः।

आश्वलायनश्रौतसूत्रेऽनुष्ठानविधानस्य स्वल्पेंऽशे एव वर्णनं विद्यते। एतच्च स्वाधारग्रन्थादैतरेयब्राह्मणादधिकानां तथ्यानां विवरणं ददाति। किं बहुनोक्तेन श्रौतसूत्रेषु शतपथादिब्राह्मणानां महत्तारतम्येन योगदानमस्तीति प्रवदन्ति मनीषिणः।

ऋग्वेद-प्रवर्त्तितेषु गृह्यसूत्रेषु गृह्यसूत्रद्वयं नितरां सुप्रसिद्धमस्ति। ते चाश्वलायन-शाङ्खायन गृह्यसूत्रे स्तः। तत्र प्रथमे गृह्यसूत्रे च चत्वारोऽध्यायाः सन्ति, प्रत्येकस्मिन्

अध्याये च खण्डान्यनेकानि सन्ति। एषु गृहोचितकर्मणां संस्काराणाञ्च सुविशदं वर्णनमुपलभ्यते। तत्र ऋषितर्पणप्रसङ्गे एतादृशानां प्राचीनाचार्याणां नामान्युपलभ्यन्ते येषां क्वचिदप्यन्यत्र कदाचिन्नोपलभ्यन्ते। अपरञ्च वेदाध्ययनस्याचारसंहिताया विधीनां वर्णनं सहैव चतुर्थे खण्डे प्रायश्चित्ताङ्गभूतस्योपाकरणस्य ( वैदिक-श्रावण्याः ) वर्णनमप्युपलभ्यते।

## गृह्यसूत्राणां परिचयः

वैदिकवाङ्मये आश्वलायनगृह्यसूत्रस्य पारस्करगृह्यसूत्रस्य च यथा नितरां प्रसिद्धिर्वर्तते तथाऽन्येषां सूत्राणां न। तत्राश्वलायनगृह्यसूत्रस्य टीकासम्पद एव लोकप्रियतायाः विश्रुतेश्च प्रमाणं विद्यते। महनीयस्यास्य सूत्रस्य प्रमुखाष्टीकाकारास्तेषां सारभूताः व्याख्याश्चेमाः सन्ति—जयन्तस्वामिनो विमलोदयमाला, अस्याः व्याख्यायाः कालः अष्टमशतकस्यान्तिमो भागः। ( ख ) देवस्वामिनः सुविख्यातं भाष्यम्। इमे टीकाकाराः वैदिकसाहित्ये मान्याश्चर्चिताश्च सन्ति। गृह्य-श्रौतसूत्रयोरुभयोरुपरि व्याख्यानमेतेषाम्। अनयोरुल्लेखः गार्ग्यनारायणेन बहुधा कृतः। ( ग ) **नारायणः**—इमे नैधुनगोत्रोत्पन्नस्य दिवाकरस्यात्मजा आसन्। समयश्चैकादशः शतकः। विद्वन्मनोहारिणी प्रख्याता टीकेयं विद्यते। ( घ ) हरदत्तस्य 'अनाविला' टीका विश्रुता वर्तते। अनेनैव वैयाकरणहरदत्तेन लोकविश्रुतायाः काशिकायाः 'पदमञ्जरी' नाम्नी टीका विरचिता। अत एव शाब्दिकमण्डलीषु प्रख्याता इमे सन्ति। इमे च द्रविडदेशीयाः किं वा तेषामाचारैः पूर्णाः परिचिता आसन् द्वादशे शतके।

आश्वलायनगृह्यसूत्रं कारिकाबद्धमपि प्राप्यते। एतत् कार्यमनेकैर्लेखकैः सम्पादितम्। तेषु रघुनाथदीक्षित-गोपाल-कुमारिलस्वामिनाञ्च योगदानं सुप्रसिद्धमेवास्ति। कोऽयं 'कुमारस्वामी' इत्यस्मिन् विषयेऽधुनापि मतैक्यं न तिष्ठति। एतदतिरिक्तमस्य गृह्यस्य प्रयोगस्य, पद्धतेः परिशिष्टस्य च विषयेऽपि ग्रन्थानामभावो न दृश्यते।

आश्वलायनधर्मसूत्रमपि द्वाविंशत्यध्यायेषूपलब्धं भवति। परञ्च प्रकाशनाधीन वर्तते। अस्यैव धर्मसूत्रस्याधारमादाय 'आश्वलायनस्मृतिर'पि हस्तलिखिता वरीवर्त्ति या हि एकादशाध्यायेषु विभक्ता, द्विसहस्रैः पद्यैश्च युक्ता अस्ति।

**शाङ्खायन**गृह्यसूत्रे षडध्यायाः सन्ति। तेषु तेषामेव विषयाणां समावेशो वर्तते ये विषयाः पूर्वचर्चिताः सन्ति। यथा विविधसंस्काराणां वर्णनं, गृहनिर्माण-गृहप्रवेशयोश्च यथास्थानं वर्णनं विद्यते। ऋग्वेदस्य तृतीयायाः शाखायाः कौषीतक्याः कल्पसूत्राणां निर्देशोऽपि विदुषां मध्ये प्राप्यते। इयं बलवती धारणा प्रचलिता वर्तते यत्—शाङ्खायन-कौषीतकि-गृह्यसूत्रे एकस्या एव शाखाया भिन्न-भिन्नाभिधाने स्तः। परञ्च निर्विवादमेतत् यत् कौषीतकी शाखा शाङ्खायनशाखातः सर्वथा भिन्नस्वरूपा विद्यते। अस्याः शाखायाः विशिष्टा ग्रन्थाः प्रकाशिताः प्रकाश्यमाणाश्च सन्ति।

कौषीतकं धर्मसूत्रमधुनाऽप्यप्रकाशितमेवास्ति। शाङ्खायनगृह्यस्य रचना सुयज्ञेन विहिता, कौषीतकगृह्यसूत्रस्य च शाम्भव्येन कृताऽस्ति। अत एवेदं सूत्रं शाम्भव्य-

गृह्यसूत्रस्य नाम्नाऽपि प्रख्यातमस्ति। शाम्भव्यः कुरुदेशनिवासी इति महाभारते चर्चितः।

अस्मिन् गृह्यसूत्रे पञ्चाध्यायाः सन्ति, प्रत्येकस्मिन् अध्यायेऽनेकानि सूत्राणि सन्ति। ग्रन्थस्य शुभारम्भो विवाहसंस्कारस्य वर्णनेन भवति, तदनन्तरं नवजात-शिशोः प्रारम्भिकसंस्काराणां सामान्यपरिचयानन्तरं व्रतबन्धस्य विवरणं पर्याप्त-रूपेण विस्तृतमस्ति। बलिवैश्वदेव-कृषिकर्मणोः अनन्तरं श्राद्धवर्णनेन गृह्यसूत्रमिदं समाप्तिमेति।

अत्र वैशिष्टयमिदं वर्तते यत्—कौषीतक-शाङ्खायनगृह्ययोर्मध्येऽनेकत्र साम्यं विद्यते। वैषम्यञ्च क्वापि दृश्यते। कौषीतकगृह्यसूत्रे केवलं पञ्चाध्यायाः सन्ति, अन्यत्र षडध्यायाः प्राप्यन्ते। आदितः चतुर्ष्वध्यायेषु विषयक्रमस्य प्रतिपादनशैल्याश्चोभ-यत्र साम्यम्। परञ्च कौषीतकस्यान्तिमाध्यायविषयस्य समीक्षणं शाङ्खायनस्यान्तिमा-ध्यायाभ्यां सह न भविष्यति। कौषीतकस्यावसाने पितृमेधसो वर्णनं विद्यते, यद्धि शाङ्खायनगृह्यसूत्रे नोपलभ्यते, एतत्तु शाङ्खायनश्रौतसूत्रस्यैवांशः। अस्त्यत्र कौषीत-कस्य क्रमः समुचितो न्यायसङ्गतश्च। यतो हि श्राद्धं गृह्यस्यैवाङ्गम्, न तु श्रौतस्येति विदन्ति वैदिकाः।

## शुक्लयजुर्वेदीयं कल्पसूत्रम्

कात्यायनप्रणीतस्य श्रौतसूत्रस्य विषयस्य निखिलं ज्ञानं श्रौतसूत्र-स्वरूपपरिज्ञानं च नितान्तमावश्यकमस्ति। ग्रन्थोऽयमस्य साहित्यस्य प्रतिनिधिस्वरूपः। सहैवान्य-श्रौतसूत्राणां तारतम्यविषये तुलनात्मक-विवेचनायातीवोपयुक्तश्चास्ति।

श्रौतसूत्रमिदं सूत्रपद्धतिमवलम्ब्य निबद्धेषु षड्विंशत्यध्यायेषु विभक्तोऽयं समस्त-यज्ञयागादीनां प्रतिपादको ग्रन्थो विद्यते। तद्विवरणं यथा—प्रथमेऽध्याये (दशकण्डि-कासु विभक्ते) यागसन्दर्भितानामावश्यकविषयाणां समावेशः, द्वितीय-तृतीयाध्याययोः दर्श-पूर्णमासयागस्याखिलं वर्णनं विद्यते। चतुर्थाध्याये—पिण्डपितृयज्ञस्य, दाक्षायणस्य, आग्रयणस्य, अग्न्याधानस्य, पुनराधानस्य, अग्न्युपस्थानस्य अग्निहोत्रस्य च क्रमेण निरूपणमस्ति। पञ्चमेऽध्याये चातुर्मास्यस्य मित्रवृन्द इष्टेश्च विधिविधानपूर्वकं मर्यादितं पुष्कलं वर्णनमुपलभ्यते। षष्ठेऽध्याये निरूढपशुबन्धस्य विस्तरेण सुस्पष्टं विवरणमस्ति। सप्तमाध्यायादारभ्य दशमाध्यायपर्यन्तमग्निष्टोमयागस्य विवरणात्मकं वर्णनं विद्यते। येषु च सप्तमाष्टमाध्याययोः अग्निष्टोमस्य प्राग्भूतानां कर्मणाम्, नवमे प्रातःसवनस्य, दशमे माध्यन्दिनस्य सायंसवनस्य च वर्णनमेतस्य महन्महत्त्वं प्रतिपादयति। एकादशा-ध्यायस्य महत्त्वपूर्णेषु भागेषु 'ब्रह्मा'संज्ञकस्य ऋत्विजः कर्त्तव्यस्योपयोगस्य च वर्णनं विद्यते। द्वादशाध्याये 'द्वादशाह' इत्यस्य, त्रयोदशेऽध्याये गवामयनस्य, चतुर्दशे वाज-पेयस्य, पञ्चदशे राजसूयस्य षोडशाध्यायमारभ्याष्टादशाध्यायपर्यन्तमग्निचयनस्य, एकोनविंशत्यध्याये सौत्रामण्याः, विंशत्यध्यायेऽश्वमेध इत्यस्य, एकविंशतितमेऽध्याये च—'पुरुषमेध, सर्वमेध, पितृमेध इत्येतेषां विस्तृतं सुव्यवस्थितञ्च वर्णनं विद्यते। **तत्र वैशिष्टयम्**—प्रथमाध्यायः कात्यायनस्य मूलभूतानां विचाराणां निर्देशकोऽस्ति। अपि

च—द्वितीयाध्यायात्—एकविंशत्यध्यायपर्यन्तस्थिताः वर्ण्यविषयाः शतपथब्राह्मणस्य भिन्न-भिन्नकाण्डानामाधारमाधृत्य विरचिताः सन्ति, उभयत्र च नितान्तं साम्यमस्ति । २२ अध्यायात् २४ अध्यायपर्यन्तानां वर्ण्यविषयाः—एकाह-अहीन-सत्रसम्बद्धाः सन्ति । खण्डस्यास्य मूलाधारः ताण्ड्य-महाब्राह्मणो विद्यते । अत्रैतद् वैशिष्ट्यं विद्यते यत्—ताण्ड्यमहाब्राह्मणः सामवेदस्य प्रधाने ब्राह्मणे सत्यपि अस्मिन् शुक्ल-यजुर्वेदीये ब्राह्मणेऽतीवोपयोगो दृश्यते । एवमेव पञ्चविंशतितमेऽध्याये च प्रायश्चित्तस्य वर्णनं विद्यते । इति तु सुविदितमस्ति यदुत्पातानां शमने यज्ञे च विहितानां त्रुटीनां परिमार्जनं प्रायश्चित्तेनैव भवति । पर्यन्ते षड्विंशतितमेऽध्याये प्रवर्ग्यस्य समीचीनं वर्णनं विद्यते । अनेन बहुविधवर्णनेन सह कात्यायनश्रौतसूत्रस्य समाप्तिर्भवति ।

अनेन प्रस्तुतेनोपर्युक्तेन विवरणेन श्रौतसूत्रविषयस्य सामान्या स्थितिः अस्मत्-समक्षं समायाति । यद्यपि ब्राह्मणग्रन्थेष्वपि यज्ञ-यागादीनां विधानं समुपलब्धं भवति । परञ्च तद्वर्णनं क्वापि सुविस्तृतं, क्वचिच्च भिन्न-भिन्नाध्यायेषु विकीर्णरूपेण प्राप्यते । श्रौतसूत्राणां मुख्यमुद्देश्यं श्रौतयागानां सङ्क्षेपेण सुव्यवस्थितं क्रमबद्धं प्रतिपादनमस्ति । अमुमेव मूलोद्देश्यं मनसि निधाय तद्विरचयितृभिः ब्राह्मणेषूपलब्धानां मूलसामग्रीणां क्वचिद्विस्तरेण क्वचित् सङ्क्षेपेण विरच्य पिपठिषूणां कृते बोधगम्यं सरलीकृतञ्च कात्यायनश्रौतसूत्रस्य मूलनिर्देशकं शतपथब्राह्मणमेवास्ति, परञ्च त्रिष्वध्यायेषु ताण्ड्य-महाब्राह्मणस्यापि साहाय्यं वर्तते । अस्य श्रौतसूत्रस्योपरि कर्काचार्यस्य सुविस्तृतं भाष्यं निगूढरहस्योद्भेदनाय कुञ्चिकैवास्ति । यस्याधारमादाय विरचिता म० म० विद्याधर-गौडमहाशयस्य सरलावृत्तिरपि नितान्तं महत्त्वपूर्णोपादेया च विद्योतते ।

**शुक्लयजुर्वेदस्य गृह्यसूत्रम्**—पारस्कर-गृह्यसूत्रमिति नाम्ना जगति सुविख्यातमस्ति । अस्य त्रिषु काण्डेषु प्रथमे काण्डे—आवसथ्याग्नेराधानम्, विवाहकार्यम्, गर्भाधानादारभ्यान्नप्राशनं यावत् वर्णितमस्ति । द्वितीये काण्डे—चूडाकरणोपनयन-समावर्तन-पञ्च-महायज्ञ-श्रवणाकर्म-सीता-यज्ञादीनां महत्त्वपूर्णं विवरणमस्ति । अन्तिमे तृतीयेकाण्डे च—श्राद्धकृत्यानन्तरम् अवकीर्णि-प्रायश्चित्तादीनां विविधविधानानां गूढं प्रतिपादन-मस्ति । अस्य टीका भाष्यसम्पद एव लोकप्रियताया द्योतिकाः सन्ति । अस्य कर्कादि पञ्चभाष्यकाराणां व्याख्याः गृह्यस्यार्थगौरवं प्रतिपादयन्ति । इमे पञ्च व्याख्यातारः सन्ति—कर्क-जयराम-हरिहर-गदाधर-विश्वनाथप्रभृतयः । हरिहरस्य पद्धतिरपि यजुर्वेदिनां कर्मकाण्डस्य निरूपिका महत्त्वपूर्णा चास्ति ।

**कात्यायनश्राद्ध-सूत्रम्**—प्रस्तुतमिदं सूत्रं श्राद्धविषयस्य वर्णनं विस्तरेण सम्पाद-यति । अस्मिन् सूत्रसंवलिताः नव कण्डिकाः सन्ति । अस्योपरि तिस्रष्टीकाः विद्योतन्ते । ताश्च यथा—कर्काचार्यस्य, गदाधरस्य, कृष्णमिश्रस्य च श्राद्धकाशिका । हलायुधस्य व्याख्याया उल्लेखः श्राद्धकाशिकायाः प्रारम्भिके द्वितीयश्लोके प्राप्यते । कात्यायनस्य कृतित्वाद् 'कातीयश्राद्धसूत्रमि'ति नाम्ना प्रख्यातमस्ति । कात्यायन-विरचितं शुल्वसूत्रं काश्याम् अच्युतग्रन्थमालातः प्रकाशितमस्ति । अस्मिन् सप्त कण्डिकाः सन्ति । यासु प्रथमकण्डिकायां परिभाषायाः प्रकरणमस्ति । इत्येव नहि—वेदि-

निर्माणस्य चतुरस्रादिक्षेत्रस्य चित्यादीनां निरूपणश्चाप्यत्र गृहीतमस्ति। ज्यामितेः वैदिकयुगीनं प्रतिपादनमत्यन्तं महत्त्वपूर्णमस्ति।

## पारस्करस्य टीकाकाराणां सामान्यपरिचयः

( १ ) **कर्कः** — इमे वैदिकवाङ्मयस्य चिरपरिचिताः मान्याष्टीकाकाराः सन्ति। एभिः कात्यायनस्य श्रौतसूत्रे पारस्करस्य गृह्यसूत्रे च चोभयत्रापि सारगर्भिता टीका सुमनोभिष्टीकिताः। धर्मशास्त्रकारेण हेमाद्रिणा स्वकीये कालनिर्णये ( त्रयोदशशतकस्यान्तिमे चरणे ) त्रिकाण्डमण्डनं समुद्धृतम्, अपि च स्वमहनीये ग्रन्थे आपस्तम्बध्वनितार्थकारिकायां द्वि-त्रिस्थलेषु ककाचार्यः समुद्धृतः। तत्र विज्ञेन हेमाद्रिणा श्राद्धनिर्णये कर्कमतः विखण्डितः। इत्थं हेमाद्रेः त्रिकाण्डमण्डनाच्च प्राचीनतरः कर्कः। तद्व्याख्यायाः नाम 'गृह्यसूत्र-भाष्यम्' अस्ति। पूर्वाचार्याणां यथा व्याख्यापद्धतिर्भवति तादृश्येव स्वल्पाक्षरैरावश्यकपदानामत्र व्याख्या विहिताऽस्ति, न तत्र किञ्चिदप्यभीष्टं वस्तु परित्यक्तम्।

( २ ) **जयरामः** — एते महान्तो वीरवसुन्धराया मेवाडस्य निवासिन आसन्। भारद्वाजगोत्रोत्पन्नस्याचार्यस्यापरनामकस्य दामोदरस्य पौत्रा आसन्। एषां जनकस्य नाम बलभद्र आसीत्। एभिः कृतभाष्यस्य नाम—सज्जनवल्लभः। मन्त्राणां सुस्पष्टा व्याख्या अस्य भाष्यस्य वैशिष्टचमस्ति। पाठ-संशोधनमत्र कामप्यनिर्वचनीयतां प्रकटयति। तत्तच्चर्चितवेदानां पाठं विशिष्टवैदिकानां मुखेभ्यः श्रुत्वा एभिर्मन्त्राणां पाठनिर्धारणं कृतम्। यत्रान्यैष्टीकाकृद्भिः पद्धतौ अर्थे चाग्रहः प्रदर्शितस्तत्र वेदपण्डितेन जयरामेण गृह्यसूत्रे समुद्धृतानां मन्त्राणां व्याख्यानामतिकौशलेन प्रामाणिकतया च कृतमस्ति। एतदेवास्य वैशिष्टचम्।

( ३ ) **आचार्यो हरिहरः** — एतेन महता स्वकृतटीकायां विज्ञानेश्वरमतं समुद्धृतमिति हेतोः एषां कालः पञ्चाशदुत्तरैकादशशतकादनन्तरमेव सिद्धचति। अपि च श्रीदत्तेन स्व-'आचारादर्शे' हेमाद्रिणा च श्राद्धप्रकरणे एतन्मतं स्थापितम्, फलतः एषां समयो द्वादशशतकान्तरालवर्ती। एते महान्तोऽनुमानेनोत्तरभारतस्य विशेषतः कान्यकुब्जप्रदेशनिवासिनः प्रतीयन्ते। हरिहरस्य व्याख्या टीकापेक्षया पद्धतेः स्वरूपधारणादतिशयं महत्त्वं धारयति। हरिहरेणास्यां पद्धतौ महता समारम्भेण गृह्यकर्मकाण्डस्य वर्णनं कृतमस्ति। गृह्यसूत्रस्य सर्वतोऽधिका लोकप्रिया व्याख्या इयमेवास्ति। हरिहरस्य धर्मशास्त्राध्ययनं महत्त्वपूर्णमस्ति। एतेषां रचनायां वैवस्वतमनोः, वृद्धशातातपमहर्षेः, याज्ञवल्क्यस्य, अङ्गिरसः, हारीतस्य, सुमन्तोः लौगाक्षेश्च—मतानि समुद्धृतानि सन्ति। टीकाप्रारम्भे कस्यापि वासुदेवनामकस्याचार्यस्य समादरपूर्वकं स्मरणं कृतमस्ति, तन्मतञ्चानुसृतं टीकायाम्। अस्याः व्याख्याया अभिधानं विद्यते 'गृह्यसूत्रव्याख्यानम्'। एते स्वात्मानमग्निहोत्रिणः ख्यापयन्ति।

( ४ ) **आचार्यो गदाधरः** — अनेन प्रबुद्धेन आचार्येण प्राचीनाचार्याणां मतान्यालोच्य स्वव्याख्यायां विस्तरेणोल्लेखः कृतः। एतादृशेष्वाचार्येषु भर्तृयज्ञः, वासुदेवः, गङ्गाधरः, रेणुदीक्षितः, हरिहरादयश्च मुख्याः सन्ति। हरिहरविषये मतखण्डने तत्र

वाक्यमिदमस्ति यत् 'अत्र हरिहरमिश्रैरबुद्ध्वैव पाण्डित्यं कृतमस्ति'। एवमेव 'दृढपुरुष'शब्दार्थस्य व्याख्यायां विविधाचार्याणां मतमाकलितमस्ति। तद्यथा इमे अर्थाः—'कोऽपि बलशाली पुरुष' इति हरिहरः, जितेन्द्रियः—भर्तृयज्ञः, जामाता—रेणुकः गङ्गाधरश्च। एष्वर्थेषु गदाधरेणान्तिमोऽर्थः स्वीकृतः। अन्यत्र च कर्क-जयराम-भर्तृयज्ञानां मतान्यालोच्य हरिहरमतं स्वीकृतम्। अत्र भाष्ये समुद्धृताः ग्रन्थाः ग्रन्थकाराश्चेमे सन्ति—मनुः, याज्ञवल्क्यः, हारीतः, आपस्तम्बः, व्यासः, मिताक्षरा पराशरः, मदनरत्नम्, वृद्धशातातपः, स्मृत्यर्थसारः, मदनपारिजातः, वशिष्ठः प्रयोग-पारिजातः हेमाद्रिश्च। गदाधरस्याभिरुचिः ज्योतिषतत्त्वविषयेऽधिका विद्यते। अतः एभिः संस्काराणां समुचितकालनिर्णयाय ज्योतिषग्रन्थानां सदुपयोगः कृतः। एतादृशो विख्यातो ग्रन्थः रत्नकोशो विद्यते। कादाचित्करूपेण मूलग्रन्थेऽनुल्लिखितानां विषयाणां विवरणमपि प्रदत्तमस्ति। गदाधरस्य भाष्ये 'गृह्यभाष्ये' भर्तृयज्ञ-जयरामयोः भाष्य-योर्विशेषः प्रभावो दृश्यते। व्याख्याता गदाधरः कस्यापि संस्कारस्य व्याख्यायां तद्विषयेऽनेकविधानां मतानां सारसङ्ग्रहणं महता विस्तरेण करोति। एतदेवास्य वैशिष्टयम्। एषां पितुर्नाम वामनदीक्षित आसीत्। एते 'त्रिरग्निचित्-सम्राड्-स्थपति-महायाज्ञिकस्योपाधिना विभूषिताः सन्ति। यतो ह्यत्र हेमाद्रेश्चर्चा विद्यतेऽतो ह्यस्य कालः पञ्चाशदुत्तरचतुर्दशशतकं यावदिति निष्कर्षः।

(५) **विश्वनाथः**—इमे नन्दपुरस्य काश्यपगोत्रिणो नागरब्राह्मणा आसन्। पितुर्नाम नरसिंहो मातुश्च गङ्गादेवी। ययोः स्मरणं टीकायाः प्रारम्भे कृतमस्ति। एषां व्याख्यायाः नाम 'गृह्यसूत्रप्रकाशिका' विद्यते, याऽवसाने खण्डिताऽऽसीत्। ग्रन्थान्तिमानां पञ्चखण्डानां टीकाग्रन्थकृतः पितृव्यस्यानन्तस्य प्रपौत्रेण लक्ष्मीधरेण १६९२ वैक्रमाब्दे लिखिता। इमे स्तम्भतीर्थादागत्य (खम्भात-गुर्जरप्रदेशात्) काश्यां वसतिं चक्रुः। अत्रैव काश्यां व्याख्येयं पूर्णतामगात्। इत्थं विश्वनाथस्य कालः षोडश शताब्द्याः उत्तरार्धः सिद्धयति। परिमाणेनेयं व्याख्या नितान्तं विस्तृता गम्भीरा च विद्यते।

**बैजवापगृह्यसूत्रम्**—अपरञ्च शुक्लयजुर्वेदस्यैकस्यान्यस्य गृह्यसूत्रस्यापि परिज्ञानं भवति। यस्य रचयितुर्नाम बैजवापो विद्यते। सुप्रसिद्धे चरणव्यूहे शुक्लयजुर्वेदस्य पञ्चदश शाखासु बैजवापमन्यतमं स्वीक्रियते। बैजवापस्य कल्पसूत्रस्य प्रथमतो निर्देशः विख्यातेन कुमारिलभट्टेन स्वतन्त्रवार्तिके कृतोऽस्ति।

आश्वलायनकं सूत्रं बैजवापिकृतं, तथैव कात्यायन-कल्पसूत्रस्यातिपुरातनेन व्याख्याकारेणाचार्येण 'पितृभूति' इत्याख्येन बैजवाप-श्रौतसूत्रस्यैकं सूत्रमपि समुद्धृत-मस्ति। तद्यथा—एवञ्च बैजवापेनाचार्येण सूचितं—न सावित्रीमाह इति।

अन्यत्राप्येतैः बैजवापस्य नामनिर्देशः कृतः। आचार्यस्य पितृभूतेः कालो नवम-शताब्द्यनन्तरं न कथमपि स्वीकार्यः। महर्षिणा कात्यायनेन विरचितैका श्रौतपद्धति-रप्युपलब्धाऽऽसीत्—यस्याः संज्ञैव 'सम्प्रदाय' इत्यासीत्। एतस्या निर्देशा उद्धरणानि च बहुषु प्राचीनग्रन्थेषूपलभ्यन्ते। किम्बहुना—याज्ञवल्क्यस्मृतौ 'बालक्रीडा'व्याख्या-प्रणेत्रा विश्वरूपाचार्येणोक्तव्याख्यायामस्याः पद्धतेः उल्लेखः कृतः। पितृभूतिः विश्व-

रूपात् प्राचीनतमः आचार्यः प्रतीयते । तस्मात् बैजवापस्य कालो नितरां प्राचीनः सिद्धयति ।

इत्येव न हि बैजवापस्य गृह्यसूत्रस्योद्धरणमनेकेषु प्राचीनमध्यकालीनेषु धार्मिकनिबन्धेष्वप्युपलब्धं भवति । एष्वपरार्कस्मृतिचन्द्रिकयोः सर्वतोऽधिकौ प्राचीनौ व्याख्याकारौ स्तः, यौ स्वग्रन्थेषु बैजवापं स्मरतः । किम्बहुना—अपरार्केण 'विनायकपूजायाः' समस्तः प्रसङ्गः बैजवापगृह्यसूत्रात् समुद्धृतम् । विनायकेन समाक्रान्तः पुरुषो नानाविधान् स्वप्नान् पश्यति । तद्यथा—विनायकोपसृष्टलक्षणं खलु भवति—स्वप्ने सर्पान् पश्यति । अत्यन्तमपोऽवगाहते । अन्तरिक्षं क्रामति । पांसुकर्दमे चावसीदति । पृष्ठतो मां कश्चित् धावतीति मन्यते । उष्ट्रान् गर्दभान् शुनो दिवाकीर्तिमांन्याश्चाप्रयातान् पश्यति । स्वप्ने दृष्टानेतानुपद्रवान् झटिति दूरीकरणार्थमुपायानां वर्णनं मिलति । श्रीमता भगवद्दत्तेन 'बैजवापगृह्यसूत्रसङ्कलनम्' इति नाम्ना समुपलब्धान् अंशान् महता श्रमेणैकत्रीकृतम् ।

अनेन प्रकारेण शुक्लयजुर्वेदीयश्रौतसूत्राणां परिचयानन्तरं कृष्णयजुर्वेदीयश्रौतसूत्राणां यथोपलब्धानां परिचयः प्रदीयते ।

**कृष्णयजुर्वेदीय-श्रौतसूत्राणि**—( १ ) तत्रादौ 'बौधायनश्रौतसूत्रम्, ( २ ) आपस्तम्बः, ( ३ ) हिरण्यकेशी वा सत्याषाढः, ( ४ ) वैखानसः, ( ५ ) भारद्वाजः, ( ६ ) मानवश्रौतसूत्रञ्च । एष्वादितः पञ्च तैत्तिरीयशाखया, अन्तिमञ्च मैत्रायणीशाखया सम्बद्धानि सन्ति । एषु बौधायन-आपस्तम्बशाखाभ्यां च कल्पस्य चतुरो ग्रन्थान्—श्रौत-गृह्य-धर्म-शुल्वविशेषान् पूर्णतमान् विचक्रिरे । एते ग्रन्थाः पारस्परिकरूपेण तथा सम्बद्धाः सन्ति येन वयमेकस्यैव ग्रन्थस्य खण्डचतुष्टयं स्वीकरिष्यामः । एकेनैवाचार्येण बौधायनेनाथवाऽऽपस्तम्बेन तत्तत् कल्पसूत्राणां प्रणयनं कृतमिति सिद्धान्तमनुसरणे न कापि विप्रतिपत्तिर्दृश्यते न वा संशीतिः । ग्रन्थकारयोरैक्यभावं नापि कोऽपि स्वीकुर्यात्, परञ्चैतत्तु संशीतिरहितं तथ्यमस्ति यदिमे समग्रा ग्रन्था एकस्यामेव समानशैल्यां निर्मिताः सन्ति । एषु प्रतिपादनमैक्यमपि सुस्पष्टमस्ति । कल्पसूत्रेष्वेषु बौधायन-मानवौ निश्चितमेव प्राचीनतमौ स्तः, यतो ह्यनयोरुल्लेख आपस्तम्बसूत्रे समुपलब्धो भवति ।

( १ ) **बौधायन-श्रौतसूत्रम्**—अस्य सम्पादनं पाश्चात्यविदुषा डॉ० 'कैलेण्ड'-महाशयेन कृतम् । तथा च गोविन्दस्वामिनो भाष्येण सह दक्षिणभारते महीशूरात् ( मैसूर ) प्रकाशितमिदं सूत्रम् । अनेनैव प्रकारेण बौधायनगृह्यसूत्र-धर्मसूत्र-शुल्वसूत्राण्यपि प्रकाशितानि सन्ति । तत्र बौधायनश्रौतस्य सम्पादनं डॉ० कैलेण्ड-महाशयेन बिब्लिओथिका-इण्डिका-कलिकातातस्तथा गोविन्दस्वामिनो भाष्येण सह महीशूर( मैसूर )नगरात् अभूताम् । गृह्य-धर्मयोः प्रकाशनं 'गवर्नमेण्ट ओरियण्टल लाइब्रेरी' महीशूरनगरे अभूत् । तथैव शुल्वसूत्रस्य परिष्करणमांग्लानुवादेन सह प्रख्यातेन प्राच्यविद्याविशारदेन डॉ० थीवोमहाशयेन 'पण्डित'पत्रस्य नवमे भागे ( काश्याम् ) कृतम् ।

( २ ) **आपस्तम्ब-कल्पसूत्रम्**—इदं कल्पसूत्रं त्रिषु प्रश्नेष्वध्यायेषु वा विभक्तमस्ति। अपि च पूर्णरूपेण सुरक्षितं सर्वाङ्गपूर्णञ्चास्ति। आपस्तम्बश्रौतसूत्रस्य मुख्यः सम्बन्धः तैत्तिरीयब्राह्मणेन सह विद्यतेऽत एवात्र कारणं यद् ब्राह्मणस्य यागविधानानां विशिष्टं सारगर्भितञ्च वर्णनमत्रोपलब्धमस्ति। एवमेव—आपस्तम्बगृह्यसूत्रे त्रिंशत् खण्डानि सन्ति, येषु विवाह-उपनयन-उपाकर्मोत्सर्जन-समावर्तन-मधुपर्क-सीमन्तोन्नयनादीनां त्रयोविंशतिविषयाणां मुख्यतः प्रतिपादनमस्ति।

आपस्तम्बधर्मसूत्रे च ब्रह्मचर्यस्य, भोजनविचारस्य प्रायश्चित्तादेश्च मुख्यानां विषयाणां वर्णनमस्ति। आपस्तम्बपरिभाषासूत्रं कपर्दिस्वामिनो भाष्येण हरदत्तस्य व्याख्यया च प्रकाशितमस्ति।

श्रौतसूत्रसाहित्ये बौधायनश्रौतसूत्रमतिप्राचीनमिति विदन्ति वैदिकविद्वांसः। इदं श्रौतसूत्रं एकोनत्रिंशत्प्रश्नेष्वध्यायेषु वा विभक्तमस्ति। प्रत्येकस्मिन् प्रश्ने कण्डिकाः सन्ति, यासु कण्डिकासु आभ्यन्तरे सूत्राणां सत्ता अस्ति। अत्रास्याः शैल्याः वैशिष्टचमस्ति यदस्याः कण्डिकायाः वाक्यं सन्धियुक्तरूपेण प्रस्तुतमस्ति। अतोऽस्याः सूत्ररूपेऽवान्तरविभाजनस्य न कोऽपि सङ्केतः प्राप्यते। परिणामतः सूत्रमिदं ब्राह्मणानां शैल्या सम्पृक्तमिव प्रतिभाति। वैशिष्टचञ्चेदं प्राचीनतां सङ्केतयति। आपस्तम्बश्रौतं चतुर्विंशति( २४ )प्रश्नेषु विभक्तमस्ति। यस्याभ्यन्तरे कण्डिकानां सूत्राणाञ्चास्तित्वं विद्यमानमस्ति। वर्ण्यविषयाः बौधायनश्रौतस्यैव सन्ति परञ्चोपस्थापनशैली नितरां भिन्ना प्रतिभाति। अपरञ्च–कात्यायनश्रौतसूत्रमिव लघ्वक्षरसूत्रेषु विभक्तमस्ति। परञ्च सूत्राणि न तथा सुसम्बद्धानि व्यवस्थितानि च सन्ति। सूत्रेषु शैथिल्याय स्थानमस्तीति विद्वज्जनसम्मतः।

( ३ ) **हिरण्यकेशी किंवा सत्याषाढश्रौतसूत्रम्**–कृष्णयजुर्वेदस्य श्रौतसूत्रमिदं महत्त्वदृष्टचा न्यूनमस्ति। अस्मिन् चतुर्विंशतिः ( २४ ) प्रश्नाः सन्ति, येषु विविधयागविधानानां वर्णनं कृतमस्ति। इदं सूत्रमापस्तम्बश्रौतसूत्रेण सह घनिष्ठसम्बन्धं स्थापयति, बहुषु स्थलेषु च तत्सूत्राणि सहसैव गृह्णाति। सूत्रशैल्यां ग्रथिते सत्यपि—अस्य शैली तथा तादृशी वा सुसंयता लघ्वक्षरा च नास्ति।

( ४ ) **वैखानसश्रौतसूत्रम्**–इदमपि तैत्तिरीयशाखया सम्बद्धमस्ति। अस्योपरि बौधायनश्रौतसूत्रादीनां पूर्ववर्णितानां त्रयाणां सूत्राणां विशेषः प्रभावो दृश्यते। कल्पसूत्रस्य द्वात्रिंशदध्यायेषु स्थितेषु एकविंशति( २१ )प्रश्नेषु श्रौतयागानामेव विवरणमुपलब्धमस्ति। बौधायनश्रौतसूत्रस्येवास्य ग्रन्थस्य रचना-शैली विद्यते। वाक्यानि दीर्घरूपे प्राप्नुवन्ति, येषु सूत्राणां विभाजनमसम्भवम्। तस्मात् सूत्रं सूत्रमिव न प्रतिभाति। अपि तु लम्बायमानानि गद्यानीव विद्यमानानि सन्ति। अनेनैव सम्बद्धं वैखानसधर्मसूत्रमप्यस्ति। यस्य सम्पादनमांग्लानुवादेन साकं पाश्चात्यविदुषा डॉ० कैलेण्डमहाशयेन कृतं कलिकातातः प्रकाशितम्। कृष्ण-शुक्लयजुषोः श्रौतसूत्रेभ्यो विपरीतमग्न्याधानात् प्रारब्धो भवति। तदनन्तरमग्निहोत्रहोमस्य वर्णनं विद्यते। पिण्डपितृयज्ञस्य वर्णनं वैखानसस्मार्तसूत्रे विद्यते, यतः उभयोः सूत्रयोः अपेक्षया—इदमेव प्राचीनतमं स्वीक्रियते।

( ५ ) **वाधूलश्रौतसूत्रम्** — इदमपि तैत्तिरीयशाखया सम्बद्धं श्रौतसूत्रमस्ति । अस्य प्रकाशनम्—अनुवादेन, भाषाशास्त्रीयटिप्पणीविभूषितया भूमिकया सह डॉ० कैलेण्ड-महाशयेन कृतम् । अस्योपर्येका टीकाऽपि प्राप्ता भवति । विदुषां मते हस्तलेखस्य इतस्ततो भावात् अस्य विमर्शात्मकस्य संस्करणस्यात्यन्तमावश्यकता वरीवर्त्ति ।

( ६ ) **भारद्वाजश्रौतसूत्रम्** — महर्षेः भारद्वाजस्य नैकटचसम्बन्धः कृष्णयजुर्वेदस्य तैत्तिरीयशाखातः परिज्ञायते । भारद्वाजशाखीयकल्पसूत्राणामनेके ग्रन्थाः समुपलब्धाः सन्ति । भारद्वाजगृह्यसूत्रस्य प्रकाशनं तु बहुकालपूर्वं हालेण्डात् अभवत् । सम्प्रति भारद्वाजसम्बद्धयोः श्रौतसूत्रयोः परिशिष्टसूत्रस्य चैषां त्रयाणां सूत्राणामेकत्र सम्पादन-मांग्लानुवादेन सह डॉ० चिन्तामणिगणेशकाशीकरेण कृतं तच्च वैदिकसंशोधनमण्ड-लात् भागद्वये १९६४ ईसवीये प्रकाशितमस्ति । भारद्वाजश्रौतसूत्रस्य तैत्तिरीयशाखया सम्बद्धाया घटनायाः प्रमाणं तैत्तिरीयसंहिताया मन्त्राणां तस्मिन् विस्तरेणोद्धरण-मस्ति । अत्र 'इति विज्ञायते' इति सङ्केतमादाय ब्राह्मणवाक्यानामुद्धरणानि सन्ति, येषु बहून्युद्धरणानि तैत्तिरीयब्राह्मणादुद्धृतानि सन्ति । कृष्णयजुषो मैत्रायणीसंहितायाः काठकसंहितायाश्चापि मन्त्राः समुद्धृताः सन्ति ।

'भारद्वाजपैतृमेधिकसूत्रं' प्राचीनकालेऽतिशयं महत्त्वपूर्णमासीत् । तत्र कारणं विद्यते यत्—आपस्तम्ब-हिरण्यकेशीशाखयोस्तस्मिन् युगे एतद्विषयकं स्वकीयं सूत्रं नासीत् अतस्तदध्ययनशीला भारद्वाजपैतृकमेधिकसूत्राणां स्वग्रन्थेषूपयोगं कुर्वन्ति स्म । एतत्तथ्यं टीकाकारैः स्पष्टीकृतमिति । ग्रन्थानामन्तरङ्गसाक्ष्यैः प्रतीयते यत् भारद्वाजश्रौतसूत्रं बौधायनश्रौतसूत्रादुत्तरकालीनमस्ति । परञ्चापस्तम्बश्रौतात्तत् पूर्व-तनं विद्यते । वस्तुतस्तथ्यप्राप्तये एषां त्रयाणां रचनाशैल्याः, विषयप्रतिपादनस्य मन्त्रो-द्धरणपद्धतेश्च समीक्षा कर्त्तव्येति शेषः ।

भारद्वाजश्रौतसूत्रस्य हस्तलेखाः प्रायो दक्षिणभारते ( उपलब्धाः भवन्ति ) प्राप्यन्ते । इत्यनेन नैतद् युक्तिकरं यदस्य मूलोद्गमस्थानं दक्षिणभारतमेव । समीक्ष्यतां तावत्—अस्मिन् विषये नैरन्तर्येण । भारद्वाजगृह्यसूत्रस्य सीमन्तोन्नयनप्रकरणे एष श्लोकः समायाति—

'सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः ।
विवृत्तचक्रा आसीनास्तीरेण यमुने तव' ॥

एतदग्रे सूत्रकारस्य कथनमस्ति यत्—यस्याः नद्यास्तटे यजमानस्यावासो भवेत् तन्नद्याः नाम ऊहनीयमिति । अस्योदाहरणं यथा—'तीरेण वेगवति तव, तीरेण कावेरि तव' । प्रस्तुतेनोदाहरणेन सिद्धचति यत्—टीकाकर्तुः देशो वेगवत्याः कावेर्या वा तटे आसीदित्यनुमानम् । पूर्वोक्तश्लोकः भारद्वाजगोत्रोत्पन्नानां मूलस्थानं तरणितनूजा-यास्तटे प्रमाणयति । आपस्तम्बश्रौते भारद्वाजश्रौते च पारस्परिकं साम्यं गरिष्ठ-सम्बन्धश्चासीत् । एतत् साम्यमुभयोर्भौगोलिकसाम्ये आधृतमस्ति । आपस्तम्बस्य मूलदेशः उत्तरभारतमेवास्ति न तु दक्षिणभारतमिति समीक्षकाणां दृढं मतमस्ति ।

**विशिष्टं विवरणमेतस्य सूत्रस्य वर्ण्यविषयाः** — भारद्वाजश्रौतसूत्रे पञ्चदश प्रश्ना

अध्याया वा सन्ति। येषु वर्ण्यविषयाः क्रमश इमे सन्ति— दर्शपौर्णमासः, अग्न्याधेयः, अग्निहोत्रम्, आग्रयणं, निरूढपशुबन्धः, चातुर्मास्यं ( वैश्वदेवं पर्वं, साकमेधं पर्वं, शुनासीरीयं पर्वं, काम्यं चातुर्मास्यं, पञ्च सांवत्सरिकम् ), पूर्वप्रायश्चित्तम्, ज्योतिष्टोमः ( प्रातःसवनं, माध्यन्दिनं सवनम्, तृतीयं सवनम् ) ज्योतिष्टोमब्रह्मत्वं चेति।

भारद्वाजपैतृमेधिक-सूत्राणां मुख्यो विषयः—श्राद्धस्यानेकविधानान्यनुष्ठानानि। अत्र द्वौ प्रश्नौ स्तः—ययोः क्रमेण प्रेतसंस्कारः, श्मशाननयनम्, दाहचितिः, पात्रचयः, अस्थिसञ्चयनम्, श्मशानचितिः इत्यादि विषयाः क्रमेण सूत्रेषु वर्णिताः सन्ति।

अपरञ्च भारद्वाजपरिशेषसूत्रं यज्ञीयपरिभाषायाः व्याख्याविवेचकं सूत्रमस्ति। अतस्तस्यैवापरं नाम परिभाषासूत्रमप्यस्ति। येषां गणनात्मिका संख्या—द्वाविंशत्युत्तरं द्विशतमस्ति। एषां सूत्राणामतिरिक्तमन्यापि काचित् सामग्री—विभिन्नवैदिक-ग्रन्थेषु भारद्वाजनाम्ना ग्रथिताः सन्ति। परञ्च भारद्वाजीयग्रन्थेषु नोपलब्धा भवन्ति। अनेन प्रतीयते यत्—श्रौतस्य विषये भारद्वाजविरचिता अन्येऽपि ग्रन्था उपलब्धा आसन्, येभ्य उद्धरणानि तत्तद्ग्रन्थेष्वद्यापि समुपलभ्यन्ते।

अपरञ्च—यद्यपि भारद्वाजधर्मस्याद्यत्वे समुपलब्धिर्न भवति परञ्चास्य सत्ता तु प्राचीनकाले विद्यमानैवासीत्। आचार्येण विश्वरूपेण याज्ञवल्क्यस्मृतौ बहुशोऽनेकविधः प्रयोगः कृतः। अत्रायं सुस्पष्टो निष्कर्षो यत्—भारद्वाजस्य समग्रं कल्पसूत्रमवश्यमेव विद्यमानमासीत्। तदन्तर्गतानि श्रौत-गृह्य-धर्मसूत्राणि समुपलब्धानि भवन्ति। एषु कानिचित् प्रकाशितानि सन्ति। इत्थं वैदिक-कर्मानुष्ठानस्येतिहासे भारद्वाजस्य योगदानमतिशयं महनीयमादरणीयञ्चास्ति।

महर्षिणा भरद्वाजेन विरचितायाः पद्यगुम्फितायाः स्मृतेः उल्लेखोऽपि मिलति। स्मृतिचन्द्रिकायाः कर्त्रा हरदत्तेन चास्याः स्मृतेः पद्यानि समुद्धृतानि सन्ति। पराशरमाधवीये शतपथब्राह्मणस्योल्लेखा भारद्वाजनाम्ना विहिताः सन्ति। हेमाद्रि-विज्ञानेश्वर-बालम्भट्टप्रभृतिभिः आचार्यैः भारद्वाजस्मृतित उद्धरणानि गृहीतानि। अतो भारद्वाजस्मृतेः सत्तायां न कोऽपि सन्देहः न कापि विप्रतिपत्तिश्चेति।

( ७ ) **मानवश्रौतसूत्रम्**—श्रौतसूत्रमिदं कृष्णयजुर्वेदस्य मैत्रायणीशाखया सम्बद्धः प्राचीनतमेषु सूत्रेष्वन्यतमं मन्यते। सम्पूर्णो ग्रन्थः पञ्चाध्यायेषु विभक्तोऽस्ति, प्रत्येकाध्यायश्च खण्डेषु विभाजितो विद्यते। तत्र प्रथमेऽध्याये दर्शपौर्णमासस्य, पिण्डपितृयज्ञस्य, अग्न्याधानस्य, अग्निहोत्रस्य, अग्न्युपस्थापनस्य, आग्रयणस्य, पुनराधानस्य, चातुर्मास्यस्य, पितृयज्ञस्य, पञ्चसांवत्सरिकस्य, पशुबन्धस्य च विवरणं विद्यते। द्वितीयेऽध्यायेऽग्निष्टोमस्य विशदं वर्णनं विद्यते। तृतीयेऽध्याये प्रायश्चित्तस्य, चतुर्थेऽध्याये प्रवर्ग्यस्य, पञ्चमेऽध्याये चेष्टेः वर्णनमस्ति। अस्य शैली वर्णनात्मिका वर्तते। कृष्णयजुर्वेदस्य च ब्राह्मणैः साम्यं स्थापयति, परञ्चास्मिन् आख्यानादेः सत्ता नैवास्ति या ब्राह्मणानां विशिष्टो विषयः।

मानवधर्मसूत्रस्य पञ्चाध्यायाः पाश्चात्यविदुषा वनाएउरेण सेण्टपीटर्सवर्गतः प्रकाशिताः, षष्ठाध्यायश्च गेल्डरेणानुवादेन सह सम्पादितः अपरञ्च मानवगृह्यसूत्रमष्टावक्रभाष्येण सह गायकवाड़ओरियण्टलसीरीजबडौदातः प्रकाशितमस्ति।

( ८ ) **वाराहश्रौतसूत्रम्**—इदमपि श्रौतसूत्रं मैत्रायणीशाखया सुसम्बद्धमस्ति। अस्मिन् त्रयोऽध्यायाः सन्ति, प्रत्येकोऽध्यायः खण्डमस्ति। तत्र प्रथमेऽध्याये दर्शमासस्य, अग्न्याधानस्य, पशुबन्धस्य, चातुर्मास्यादीनाञ्च, द्वितीयेऽध्यायेऽग्निचयनस्य तृतीयेऽध्याये च वाजपेय-राजसूय-अश्वमेधयागानां वर्णनं विद्यते। यागानुष्ठानानां विशदं वर्णनं कात्यायनश्रौतसूत्रस्येवोपलब्धं न भवति। सूत्राण्यल्पकलेस्वराणि परिज्ञाने च सारल्येन सुबोधानि सन्ति। एतच्छूत्रं हौत्र-काम्ययोः दर्शपूर्णमासस्य वर्णनं न करोति। एतच्च सूत्रं डॉ०कैलेण्ड—डॉ०रघुवीराभ्यां सम्पादितं लवपुरात् प्रकाशितमस्ति।

कृष्णयजुर्वेदस्य मैत्रायणीशाखायाः स्थानविषये चरणव्यूहस्य टीकायामयं श्लोकः प्राप्यते—

'मयूरपर्वताच्चैव यावद् गुर्जरदेशतः।<br>
व्याप्ता वायव्य-देशात्तु मैत्रायणी प्रतिष्ठिता'॥

**अत्रायमाशयः**—महाराष्ट्रप्रदेशस्य नासिकमण्डलस्थितात् मयूरपर्वतादारभ्य गुर्जरप्रदेशं यावत् यो हि भागस्तस्मिन् मैत्रायणीशाखा सुप्रतिष्ठिता विद्यते। अद्यापि सैषा स्थितिर्विद्यमाना विद्यते। मैत्रायणीशाखायाः सहयोगिनौ द्वौ ग्रन्थौ विशिष्टौ स्तः—तौ च मानव-वाराहौ। अनयोः मानवशाखायाः श्रौत-गृह्ये उपलब्धे स्तः। मानवश्रौतसूत्रमानवगृह्यसूत्रे च प्रकाशिते स्तः। एवमेव वाराह-श्रौत-गृह्ये प्रकाशिते स्तः। वाराहगृह्यसूत्रं डॉ० शामशास्त्रिणा गायकवाड ओ० सी० बडोदातः प्रकाशितम्। अस्यैव ग्रन्थस्यान्यसंस्करणञ्च डॉ० रघुवीरेण १९३२ ईसवीये वर्षे प्रकाशितम्। वाराश्रौतसूत्रस्य सम्पादनं डॉ०कैलेण्ड-डॉ०रघुवीराभ्यां १९३३ ईसवीये कृतम्। अस्य श्रौतसूत्रस्यैको हस्तलेखः समुपलब्धोऽस्ति, यस्मिन् वाराहपरिशिष्टमपि प्राप्तमस्ति। एतेनेदं सुस्पष्टं भवति यत् वाराहशाखाया अस्तित्वं पुराकाले सविशेषमासीत्, महाराष्ट्रे च 'धूलिया' इति नाम्नि नगरेऽद्यापि वाराहशाखाध्यायिनां ब्राह्मणानां वसतिर्विद्यते।

( ९ ) **काठकश्रौतसूत्रम्**—अस्य ग्रन्थस्य स्वल्पांश एवोपलब्धो भवति। ब्यूलरमहाशयेन काश्मीरस्यान्वेषणे उपलब्धमेतत्। पिण्डपितृयज्ञात् सम्बद्धस्यास्य श्रौतसूत्रस्य स्वल्पांशो भागः। सम्पूर्णग्रन्थोऽधुनापि नास्ति समुपलब्धः। काठककल्पसूत्रस्य गृह्यभागः तिसृभिष्टीकाभिस्सह सारांशेन प्रकाशितः। अस्माकं सौभाग्येन सः गृह्यकाठकश्रौतसूत्रस्येव खण्डितो नास्ति।

## कृष्णयजुर्वेदीयगृह्यसूत्राणि

( १ ) **बौधायनगृह्यसूत्रम्**—गृह्यसूत्रमिदं बौधायनकल्पसूत्रस्यैको विशिष्टोऽशोऽस्ति। महीशूर( मैसूर )राजकीय-ओरियण्टलपुस्तकालयसीरीजे प्रकाशितमिदं गृह्यसूत्रं परिभाषया गृह्यशेषेण पितृमेधसूत्रैश्च समन्वितमस्ति। अस्मिन् चत्वारः प्रश्नाः सन्ति। भिन्नेषु हस्तलेखेषु गृह्यसूत्रस्यास्य दश प्रश्नाः ( अध्यायाः ) उपलब्धाः सन्ति, येनास्मिन् विविधपरिवर्तनानां परिवर्धनानाञ्च सङ्केतो मिलति।

( २ ) **भारद्वाजगृह्यसूत्रम्**—गृह्यसूत्रमिदं भारद्वाजकल्पसूत्रस्यांशोऽस्ति, यस्मिन् त्रयः प्रश्नाः ( अध्यायाः ) सन्ति। अस्य प्रकाशनं लाइडेनस्य डॉ० सालोमन्स-महाशयेन कृतम्। विज्ञेन सम्पादकेनास्य गृह्यस्य परिवर्धनविषये यन्मतमभिव्यक्तं तन्न समुचितं प्रतीयते। विवाहप्रकरणेऽनेकत्राधुनिकतायाः सङ्केतो मिलति। तेन न चात्र क्षेपकस्य सम्भावना व्यक्तीभवति।

( ३ ) **आपस्तम्बगृह्यसूत्रम्**—आपस्तम्बकल्पसूत्रस्य सप्तविंशतितमप्रश्न एव गृह्यसूत्रमस्ति, यस्मिन् त्रिंशत् प्रश्नाः सन्ति। गृह्यमिदं मन्त्रपाठस्य मन्त्राणां निर्देशं करोति ये मन्त्राः कल्पसूत्रस्य २५-२६ प्रश्नयोः गृहीताः सन्ति। हरदत्तस्य अनाकुलावृत्त्या सुदर्शनावृत्त्या सुदर्शनाचार्यस्य च 'तात्पर्यदर्शन'व्याख्यया सह 'चौखम्बासीरीजे' प्रकाशिता विद्यते।

आपस्तम्बगृह्यसूत्रमष्टपटलेषु विभक्तमस्ति। प्रत्येकस्मिन् पटले खण्डानि सन्ति, येषां संख्या त्रयोविंशतिः अस्ति। खण्डेषु सूत्राणां स्थितिर्वर्तते। परिणामतः समस्तो ग्रन्थः सूत्रेषु विभक्तोऽस्ति। अस्य गृह्यस्य विषयः स एवास्ति यो ह्यन्यगृह्यसूत्रेषूपलब्धो भवति। अस्य द्वौ व्याख्याकारौ स्तः। तत्र प्रथमो हरदत्ताचार्यः यः पञ्चदशशताब्दीतः प्राचीनतरः, द्वितीयः सुदर्शनाचार्यः यः १६६८ वैक्रमाब्दे विरचितायां निर्णयसिन्धौ कमलाकरभट्टेन नाम्ना निर्दिष्टः अर्वाचीनः विद्यते। हरदत्त महाशयाः शैवमतानुयायिनः सन्ति, अपि च कावेरी-तटनिवासिनो दाक्षिणात्या विद्वांस आसन्, यैः आपस्तम्बगृह्यसूत्रे गृह्यमन्त्रे, धर्मसूत्रे परिभाषायाञ्च व्याख्या लिखिता। आश्वलायनगृह्यसूत्रस्य 'अनाविला'टीकायाः गौतमधर्मसूत्रस्य च 'मिताक्षरा'व्याख्याया रचयितार इमे हरदत्ताचार्याः सन्ति।

( ४ ) **हिरण्यकेशिगृह्यसूत्रम्**—अस्यापरं नाम सत्याषाढगृह्यसूत्रमस्ति, यत् हिरण्यकेशिकल्पसूत्रस्यैकोनविंशति-विंशतितमप्रश्नयोः समाहितमस्ति। गृह्यानुष्ठानेषु अस्मिन् आवश्यका मन्त्राः समावेशिताः सन्ति। अत्र प्रयुक्ता अनेके शब्दा अपाणिनीयाः सन्ति। अस्योपरि मातृदत्तस्य प्रौढा प्राञ्जला च व्याख्या विद्यते। सारगर्भितया टीकया सह मूलग्रन्थस्य सम्पादनं डॉ० क्रिस्तेमहाशयेन वियनातः प्रकाशितम्। अस्यांग्लानुवादश्च 'सेक्रेड बुक आफ ईस्ट' इत्याख्यायां ग्रन्थमालायां डॉ० ओल्डनवर्गनामकेन विदुषा प्रकाशितम्।

( ५ ) **वैखानसगृह्यसूत्रम्**—तैत्तिरीयशाखया सम्बद्धमिदं गृह्यसूत्रमवान्तरकालीनं कथ्यते। सूत्रमिदमनुष्ठानेषु प्रयोजनीयानां मन्त्राणां केवलं प्रतीकानामेवोल्लेखयति। एषां सर्वेषां मन्त्राणां स्वतन्त्रं सङ्कलनं 'वैखानसीया मन्त्रसंहिता' इति स्वरूपे कृतमस्ति। गृह्यस्य मन्त्रसंहितायाश्च पारस्परिकसम्बन्धविषये विद्वत्स्वैकमत्यं नास्ति। कतिपये सज्जनाः मन्त्रसंहितां गृह्यात् प्राचीनां मन्यन्ते। केचनार्वाचीनां समकालीनां वा मन्त्रसंहितां स्वीकुर्वन्ति। डॉ० कैलेण्डेनास्यांग्लानुवादः प्रकाशितः।

( ६ ) **अग्निवेश्यं गृह्यसूत्रम्**—अस्य गृह्यस्य रचयितारः 'अग्निवेश' नामका वैदिका आचार्याः सन्ति, यैः तैत्तिरीयानां बाधूलशाखान्तर्गताया 'अग्निवेश'-

उपशाखायाः प्रवर्तनं कृतम्। अन्येभ्यो गृह्यसूत्रेभ्योऽस्य वर्ण्यविषयो रचनाकौशलश्च भिन्नो दृष्टिगोचरो भवति। अस्मिन् वर्णितेष्वनुष्ठानेषु नारायणबलेः, यतिसंकारस्य, संन्यासविधेः वानप्रस्थविधेश्चोपरि—अवान्तरकालीन-धार्मिकसम्प्रदायानां प्रभावः स्पष्टतः परिलक्षितो भवति। परिणामतः सामान्यगृह्यसूत्रेभ्योऽस्य मार्ग एव भिन्नोऽनन्तशयनसंस्कृतग्रन्थमालायामिदं गृह्यसूत्रं प्रकाशितमस्ति।

(७) **मानवगृह्यसूत्रम्**—अस्यापरं नाम मैत्रायणी मानवगृह्यसूत्रमप्यस्ति। मैत्रायणीशाखायाश्चरणव्यूहे निर्दिष्टानां भेदानां मानवस्य, वराहस्य, दुन्दुभेः, छागलेयस्य, हारिद्रवेयस्य श्यामायनीयस्य च 'मानवाः' अन्यतमा विभेदाः सन्ति। परिणामतोऽस्या उपशाखाया मानवगृह्यसूत्रमिदं मैत्रायणीयसंहिताया मन्त्रान् प्रयोगावसरे निर्दिष्टान् करोति। एतत् समुचितमेव। अस्मिन् गृह्ये द्वौ पुरुषौ प्रकरणे वा स्तः। प्रत्येकस्मिन् पुरुषेऽनेकाः कण्डिकाः सन्ति। अस्मिन् गृह्यसूत्रे विनायकपूजाया विशिष्टं वर्णनं विद्यते। अष्टावक्रभाष्येण सह गायकवाड़-ओरियण्टल-सीरीजे बडोदरातः प्रकाशितमस्ति। भाष्यकारोऽस्य रचयितुर्नाम मानवाचार्य इति प्रतिपादयति। अस्य विशिष्टज्ञानविषये विद्वांसोऽपि स्वल्पज्ञानिनः सन्ति। न जाने मानवाचार्यो वस्तुतः कोऽपि प्राचीनाचार्योऽथवा मानवशाखया सम्पृक्तत्वात् लेखकस्य पश्चात्कालीनं नामकरणमस्ति।

(८) **वाराहगृह्यसूत्रम्**—मैत्रायणी-शाखान्तर्गताया वाराह-उपशाखाया उल्लेखः चरणव्यूहे वर्तते। फलतो गृह्यसूत्रमिदं मैत्रायणीसंहिताया मन्त्राणां प्रयोगं विदधाति। अस्य बहूनि सूत्राणि मानवगृह्यस्य काठकगृह्यस्य च सदृशानि सन्ति। गृह्योपयोगिनां विशेषवस्तूनामभावे तथा महत्त्वपूर्णं नास्ति।

(९) **काठकगृह्यसूत्रम्**—एतदपि मानवगृह्यसूत्रेणेव साम्यं दधाति, कठशाखया च स्पष्टरूपेण स्वसम्बन्धं स्थापयति। काठकगृह्यसूत्रस्यैवापरं नाम लौगाक्षिसूत्रमस्ति। अनेनैव नाम्ना हेमाद्रिणान्यैर्निबन्धकारैश्चास्योद्धरणं स्व-स्वग्रन्थेषु प्रदत्तम्। अत्र द्वौ विभागौ मिलतः। भागस्यैकस्यानुसारमस्मिन् प्रारभ्यान्तं यावत् ७३ कण्डिकाः सन्ति। द्वितीये प्रकारे चास्मिन् पञ्च महत् खण्डानि अध्याया वा सन्ति। पञ्चाध्यायेषु विभागात् अस्य लोकप्रियं नाम 'गृह्य-पञ्चिका' विद्यते। अस्य त्रिषु टीकाकारेषु—आदित्यदर्शनः प्राचीनतमः सर्वश्रेष्ठश्चास्ति। माधवाचार्यस्यात्मजस्य ब्राह्मणबलस्य व्याख्या नेयं टीकाऽपि त्वधिकांशे पद्धतिरेवास्ति। हरिपालात्मजस्य देवपालस्य टीका भाष्यनाम्ना प्रख्याताऽस्ति। आसां तिसृणां व्याख्यानां सारांशेन सह डॉ० कैलेण्डेन लवपुरात् १९८१ वैक्रमाब्दे अतीव मनोहरं स्फीतं संस्करणं प्रकाशितम्।

## सामवेदीय-कल्पसूत्राणि

**आर्षेयकल्पः**—सामवेदकल्पसूत्रेष्वस्य नाम सर्वोत्कृष्टं विद्यते। महातपा मशको नाम ऋषिः अस्य रचयिता प्रख्यापितः। दीर्घकायोऽयं ग्रन्थः, यस्मिन् एकादशाध्यायाः सन्ति। आर्षेयकल्पस्य मुख्यं प्रयोजनमिदमस्तीति यत् कस्मिन् यागे कस्य विशिष्टस्य साम्नो गायनं सम्पाद्यते। अयं कल्पोऽस्य विषयस्य पूर्णं परिज्ञानं प्रददाति। एतत्तु

सुप्रसिद्धमेवास्ति यत् सोमयागस्य त्रयः प्रकारा भवन्ति---( १ ) **एकाह**—यो यागः एकस्मिन् दिवसे एव सम्पन्नो भवति । ( २ ) **अहीन**—( यागः ) द्वाभ्यां दिवसाभ्यामारभ्यैकादशदिवसपर्यन्तं यावत् प्रचलति । ( ३ ) **सत्र**—द्वादश-दिवसैः प्रारभ्य वर्षमेकं यावत् ततोऽप्यधिककालपर्यन्तं प्रचलन्ति यागाः । आर्षेयकल्पस्य सम्बन्धः ताण्ड्यब्राह्मणेन सह विद्यते ।

अत्रायमभिप्रायः—अयं कल्पः सामवेदीयब्राह्मणयागानां येन क्रमेणोल्लेखं करोति तेनैव क्रमेणानुवर्तनं कल्पसूत्रमिदमपि करोति । एतद्यागानामतिरिक्तमत्र चतुर्णामभिचारयागानामप्युल्लेखो वर्तते—श्येन-इषु-सन्दंश-वज्रप्रभृतीनां येषां वर्णनं ताण्ड्यब्राह्मणे अनुपलब्धत्वात् तत्पूरके षड्विंशब्राह्मणे एव मिलति । विशेषतो ध्यातव्यमत्र एतदप्यस्ति यत्—आर्षेयकल्पः एषां यागानां क्रमो वर्णनञ्च षड्विंशानुसारमस्वीकृत्य यजुर्वेदानुसारं स्वीकरोति । आर्षेयकल्पः सामर्चानामुल्लेखः प्रतीकेन ददाति । यश्च सङ्केतः ऋचः सङ्केतको न भूत्वा तृचं सङ्केतयति । सोमयागस्यावसरे प्रयुज्यमानानां साम्नां सङ्गीतिप्रकारस्य विस्तरेण वर्णनमेतस्य कल्पसूत्रस्य महत्त्वपूर्णं वैशिष्ट्यमस्ति ।

ज्योतिष्टोम-संस्थानानि चतुर्विधानि भवन्ति—अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्च । अग्निष्टोमसंस्थानवतां सोमयागानां समाप्तिः अग्निष्टोमनामकात् सामगायनाद् भवति । उक्थ्ययागानामवसान उक्थ्यस्तोमैर्भवति । अत्रैतद्ध्यातव्यमस्ति यत् ज्योतिष्टोमे प्रयुक्तः 'ज्योति'शब्दः पारिभाषिकः शब्दो विद्यते । यः शब्दः त्रिवृत्-पञ्चदश-सप्तदश-एकविंशस्तोमानां वाचको विद्यते । यश्चाग्निष्टोमसंस्थायां 'बहिस्पवमान'-आज्य-माध्यन्दिन-पृष्ट-आर्भव-अग्निष्टोमादयः साम्ना सह नियतक्रमे सम्बन्धं स्थापयन्ति । एतेषु विभिन्नेषु यागेषु प्रयुक्तानां साम्नामिदं कल्पसूत्रं विधिवदनुष्ठानं प्रयोगञ्च साधयति । सामगायनस्यानेकविधसूक्ष्मोपदेशप्रदमिदं कल्पसूत्रं विषयस्य पाण्डित्यपूर्णविवेचने साम-गायनानां विविधप्रकाराणां निरूपणे स्वप्रतिस्पर्द्धिनं कमपि ग्रन्थं न स्वीकरोति । विशेषतः कल्पसूत्रमिदं ताण्ड्यमहाब्राह्मणस्य पूरकमिति हेतोर्भविष्यति यदिदं ब्राह्मणे निर्दिष्टयागे प्रयुक्तानां साम्नां विवरणं प्रददाति । इदं लाट्यायनश्रौतसूत्रात् प्राचीनतमं विद्यते, यतो हि लाट्यायनेनास्य निर्देशः कृतः ।

आर्षेयकल्पस्यैकः पूरकग्रन्थोऽप्यस्ति क्षुद्रकल्पः । द्वावपि वस्तुत एकस्यैव कल्पसूत्रस्य द्वौ भागौ स्तः । आर्षेयकल्पस्य धीमतष्टीकाकारस्य नाम वरदराजः, येन स्वकृतटीकायाः प्रारम्भे एको विस्तृत उपोद्घातः प्रदत्तः । अस्मिन् ग्रन्थे परित्यक्तानामग्निष्टोम-उक्थ्य-अतिरात्रादीनां वर्णनं प्रारम्भे प्रदत्तमस्ति । सामगायनं सोमयागविधानस्य च विषये अतिशयामुपादेयां सामग्रीं प्रदायास्मिन् उपोद्घाते स्वयाज्ञिकानुशीलनस्य विश्लेषणस्य च प्रगाढः परिचयः प्रदत्तः । अस्य पितुर्नाम 'वामनार्यः' विद्यते । एतदतिरिक्तमेतेषां न किमपि ज्ञातमस्ति । अत्र वैशिष्ट्यं विद्यते यत्—ग्रन्थाध्यायान्ते सर्वत्र—प्रीयतां पुरुषोत्तमः तथा गोविन्दः प्रीयताम्' इति लिखितमस्ति । प्रतीयते यदिमे श्रीवैष्णवमतावलम्बिनो तामिलनाडुनिवासिन-

श्चासन् । एतैः उपग्रन्थसूत्रस्यैकस्मिन् परिच्छेदभूते प्रतिहारसूत्रे स्वटीका प्रख्यापिता, यतः उपग्रन्थसूत्रस्य टीकाकारैर्माधवाचार्यैरस्मिन् अंशे टीका न लिखिताऽऽसीत्। क्षुद्रकल्पे टीकाकर्तृभिः श्रीनिवासमहाशयैः आर्षेयकल्पे अस्या विवृतेः स्वटीकायां क्वाप्युल्लेखो न कृतः। आर्षकल्पे एकादशाध्यायाः सन्ति, येषु प्रतिपाद्यविषया इमे सन्ति, तथा च—प्रथमेऽध्याये 'गवामयन'स्य विवरणमस्ति। द्वितीयेऽपि पूर्वोक्तवत्। तृतीयाध्यायादारभ्य पञ्चमाध्यायपर्यन्तम् 'एकाह' इत्यस्य वर्णनं विद्यते। चतुर्थाध्याये चातुर्मास्यस्य, पञ्चमाध्याये 'राट्' इत्यादीनाम्, षष्ठाध्यायात् अष्टमाध्यायपर्यन्तम् अहीनयागानां, नवमेऽध्याये साम्नः, दशमैकादशाध्याययोश्च नानाविधानामयनानां विस्तृतं वर्णनमस्ति। यत्र—आदित्यामयनस्य, अङ्गिरसामयनस्य, सारस्वतमयनादीनां दशविधानां यागानां निर्देशोऽस्ति। ग्रन्थोऽयं सर्परात्रस्य—प्रजापतेः सहस्रसंवत्सरस्य विश्वसृजामयनस्य च सङ्क्षिप्तवर्णनेन सह समाप्तिमेति।

क्षुद्रकल्पसूत्रम्—अस्य रचना कल्पसूत्रे स्थितेऽपि कल्पसूत्रेषु गृहीतायां सूत्रशैल्यां विद्यते। अस्य लेखन-शैली ब्राह्मणशैल्यामस्ति। एतत् सूत्रमार्षेयकल्पस्य द्वितीयो भागः स्वीक्रियते। वस्तुतः सूत्रमिदमार्षेयकल्पस्य पूरकमेवास्ति। यतो हि तस्मिन् अवर्णितानां यागानां वर्णनं विधाय विषय-पूर्त्तिर्भवति। अत एव द्वितीयष्टीकाकारः श्रीनिवासः क्षुद्रकल्पममुम् 'उत्तरकल्पसूत्रमि'ति स्वीकरोति। परञ्चोभौ ग्रन्थौ एक एवाभिन्नग्रन्थ इति स्वीकारे सहमतिर्विद्यते। अत एवान्यश्रौतसूत्राणि द्वयोरैक्यं स्वीकृत्य अमुम् 'आर्षेयक्षुद्रकल्पम्' इति नाम्ना व्यवहरन्ति।

आर्षेयकल्पस्याधारः 'पञ्चविंशब्राह्मणम्' इति विद्यते। कारणञ्चात्र कल्पसूत्रमिदं ब्राह्मणे वर्णितात् 'गवामयन'प्रसङ्गादारभ्य 'विश्वसृजामयन'पर्यन्तं यागानां तेनैव क्रमेण वर्णनं करोति, परञ्च क्षुद्रकल्पसूत्रं पञ्चविंशब्राह्मणेऽगृहीतानामवर्णितानां विषयाणां निरूपणं करोति। अस्मिन् त्रयः प्रपाठकाः सन्ति येषु षडध्यायाः सन्ति। तत्र प्रथमेऽध्याये—काम्ययज्ञानां तत्प्रयुक्तानां सामप्रकाराणाञ्च विशदं वर्णनं विद्यते। द्वितीयाध्यायस्य विषयः 'प्रायश्चित्तम्' विद्यते। तृतीयाध्यायस्य प्रारम्भः त्रिवर्णैर्विधीयमानात् यज्ञादस्ति। ब्राह्मणकल्पस्य बर्णनं ताण्डचब्राह्मणे अभूत्। अतोऽत्र नैव चर्चितः। अन्यवर्णानामेव यागानां निरूपणमस्ति। तत्पश्चाच्च—उभयसामयज्ञस्य, प्रवर्ह्यज्ञस्याग्निष्टोमस्य च क्रमेण वर्णनानि सन्ति। एवमेव चतुर्थाध्याये पृष्टयषडहानुकल्प-द्वादशाहानुकल्पा वर्णिताः सन्ति। तृतीय-चतुर्थाध्याययोः समावेशो द्वितीये प्रपाठके विद्यते। सम्पूर्णस्तृतीयः प्रपाठकः स्वपञ्चम-षष्ठाध्याययोः द्वादशाहविकल्पस्य महत्सम्भारेण निरूपणं करोति। एतावता क्षुद्रकल्पवर्ण्यविषयाणां यत् किञ्चित् सङ्केतः प्राप्नोति।

अस्य कल्पसूत्रस्य टीकाकर्तुर्नाम श्रीनिवासाचार्यः। इमे तामिलनाडुप्रदेशस्य श्रीवैष्णवा आसन्। एतेषां स्वीयो वेदः कृष्णयजुर्वेद आसीत्। एकनिष्ठे वैदिककुले एषां जनिः। पितुर्नाम टीकापुष्पिकायां 'श्रीरामानुजसिद्धान्त-स्थापनाचार्य-शतक्रतु ताताचार्य' इति निर्दिष्टमस्ति। टीकाकारश्च स्वात्मानं शतक्रतु-चतुर्वेदी-श्रीनिवासाचार्यरूपेण ख्यापयति। एतेन सिद्ध्यति यदिमे वेदविद्याया निष्णाताः पण्डिता आसन्

इत्येव नहि रामानुजाचार्यः सिद्धान्तस्य तलस्पर्शिनो मर्मज्ञा विद्वांस आसन्। अस्य तथ्यस्योद्घाटनं टीकाकारैः स्वयमेवोट्टङ्कितम्, तद्यथा तद्गिरैव—

'शतक्रतुं तातगुरुं वेद-वेदाङ्गपारगम्।
वेदान्तानां गुरुं वन्दे वेदान्ताचार्यलक्षणम्॥
श्रीश्रीनिवासगुरुणा शतक्रतुतनूभुवा।
चतुराम्नाय-षट्सूत्री-पारगेन हरेर्मुदे'॥

अस्य पितुः शतक्रतुकुमारताताचार्यस्य संरक्षका आसन्–तञ्जोरभूपतयः अच्युताः। एषां कालः १५६१ ईसवीयतः—१६१४ ईसवीयपर्यन्तम्। कुमारताताचार्येण स्वरचिते नाटके पारिजातहरणे स्वसप्तपुत्राणां तत्प्रणीतग्रन्थानाञ्च निर्देशः कृतः। श्रीनिवासः तस्य सप्तपुत्रेषु ज्येष्ठ आसीत्, यस्य ग्रन्थेषु अस्य क्षुद्रकल्पभाष्यस्यापि नाम तत्र निर्दिष्टमस्ति। तेनैतत् स्पष्टं भवति यत्—श्रीनिवासः सप्तदशशतकस्य प्रारम्भिके काले विद्यमान आसीत्। अनेन याज्ञिकेन विविधानेकयज्ञानां सम्पादनं कृतमत एवास्य शतक्रतु-चतुर्वेदी-विशेषणयोः औचित्यं सिद्ध्यति। यज्ञसंस्थायाः सिद्धान्तस्यानुष्ठानस्य च व्युत्पन्न-पण्डितः आसीत्। एतत्तथ्यं तत्कृतभाष्येण सद्यः स्फुरितो भवति। आर्षेयकल्पस्यैवाचार्यमशकगार्ग्यः अस्य पूरककल्पसूत्रस्यापि रचयिता स्वीकृतः। लाटचायनश्रौतसूत्रमग्निस्वामिनो भाष्येण सह बिब्लि० इण्डिकायां प्रकाशितमस्ति। सामवेदेन सम्बद्धत्वाद् तेषां साम्नां गायनस्य वर्णनं करोति येषामग्निष्टोमेऽन्यसोमयागेषु च प्रयोगाः सन्ति। द्राह्यायनश्रौतसूत्रमप्यनेन वेदेन सम्बद्धमस्ति। अस्मिन् ग्रन्थे ३२ पटलानां सत्ता विद्यते।

लाट्यायनश्रौतसूत्रेण सहास्य महत् साम्यं विद्यते। जैमिनीयश्रौतसूत्रमपि सामवेदस्य जैमिनीयशाखया सम्बन्धितं श्रौतसूत्रमस्ति। अस्मिन् सूत्रे २६ कण्डिकाः सन्ति। यस्य सम्पादनं गास्ट्रामहाशयेन कृतम्। अग्न्याधेयस्याग्निहोत्रहोमस्य चात्र वर्णनं विद्यते।

**( क ) गोभिलगृह्यसूत्रम्**—इत्यस्य प्रकाशनमनेकत्र सम्पन्नमस्ति। एतच्चान्यविषयैस्सह पिण्डपितृयज्ञस्यापि वर्णयति। गोभिलगृह्यसूत्रस्यांग्लानुवादः 'सेक्रेड बुक आफ इस्ट' इति 'सीरीजस्य' त्रिंशत्तमे खण्डे डॉ० गोल्डेनवर्गेण कृतः। खदिरगृह्यसूत्रस्याप्यांग्लानुवादः एकोनत्रिंशत्तमे खण्डे प्रकाशितो विद्यते। अपरञ्च गृह्यसूत्रमिदं रुद्रस्कन्दस्य टीकया सह महीशूरात् प्रकाशितमस्ति। अन्यच्च जैमिनीयं गृह्यसूत्रं डॉ० कैलेण्डेन लवपुरात् प्रकाशितम्।

एषु त्रिषु सामवेदीय-गृह्यसूत्रेषु गोभिलगृह्यसूत्रमतीव प्रख्यातं विद्यते। तथैवातिप्रचलिततया कौथुमशाखया सम्बद्धत्वात् अत्यधिकं लोकप्रियञ्चाप्यस्ति। एतच्च मन्त्रब्राह्मणनामकात् सामवेदीयमन्त्रसङ्ग्रहात्मकग्रन्थादनुष्ठानावसरे मन्त्राणामुद्धरणं ददाति, तत्तु प्रतीकरूपेणैव। सामसंहिताया मन्त्रभागा अपि समुद्धृताः सन्ति। मन्त्रब्राह्मणस्य गोभिलगृह्यसूत्रस्य च पौर्वापर्यविषये विद्वत्सु मतभेदो विद्यते। परञ्च द्वयोः ग्रन्थयोः तुलनात्मकसमीक्षणेन 'मन्त्रब्राह्मण' इति संज्ञीतिरहितं गोभिल-

गृह्यसूत्रात् प्राचीनतरं सिद्धयति । अस्य ब्राह्मणस्य मन्त्राः सम्प्रदाये प्रसिद्धा आसन् । अत एव तत्प्रतीकानां सङ्केतं ग्रन्थकारः करोति, तस्मिंश्चानुपलब्धानां मन्त्राणामुद्धरणं पूर्णरूपेण करोति । यदि चेत् मन्त्रब्राह्मणस्य पूर्वसत्ता न स्यात्तदा प्रतीकानामुद्धरणस्य सङ्गतिः कीदृशी ?

( ख ) **खादिरगृह्यसूत्रम्** —सामवेदस्य राणायणीयशाखया सम्बद्धमिदं गृह्यसूत्रं गोभिल( गृह्य )सूत्रस्योपरि सर्वात्मना आधारितमस्ति । तदादेशा नियमाश्चात्र सङ्क्षेपेण प्रस्तुताः सन्ति । एतदेव कारणं यदिदं निश्चितरूपेण गोभिलगृह्यसूत्रस्यैव सङ्क्षिप्तं संस्करणमस्ति ।

( ग ) **जैमिनीयगृह्यसूत्रम्** —सूत्रमिदं खण्डद्वये विभक्तमस्ति । तत्र प्रथमे खण्डे २४ कण्डिकाः द्वितीये खण्डे च नव कण्डिकाः सन्ति । अस्य सुबोधिनी टीका 'श्रीनिवासाध्वरी'महाशयेन विरचिताऽस्ति । अस्याष्टीकायाः कतिपयानि महत्त्वपूर्णान्युद्धरणान्येव मूलग्रन्थेन सह डॉ० कैलेण्डेन प्रकाशितानि । जैमिनीयशाखाया अनेकानि तथ्यान्युपलब्धानि सन्ति । पुरुषसूक्तस्य सप्त एव ऋचो निर्दिष्टाः सन्त्यत्र याः सामशाखानुसार्यः सन्ति ।

## अथर्ववेदीयं कल्पसूत्रम्

अथर्ववेदस्यैकमात्रं कल्पसूत्रं 'वैतानश्रौतसूत्रम'स्ति, यद्धि गोपथब्राह्मणस्योपरि आधारितमस्ति । अपि चैतत् कात्यायनश्रौतसूत्रेणापि घनिष्ठं सम्बन्धं स्थापयति । अस्मिन् अष्टाध्यायाः सन्ति, ये कण्डिकासु विभक्ताः सन्ति । श्रौतसूत्राणामितिहासे सूत्रमिदं सर्वतोऽवान्तरकालीनो ग्रन्थः स्वीक्रियते । इदं परिमाणे स्वल्पमस्ति । एतच्च 'ब्रह्मा' नामकस्य ऋत्विजः, तत्सहायकस्य यजमानस्य च कर्त्तव्यानामनुष्ठानानाञ्च विवरणं ददाति । एतत् गोपथब्राह्मणस्यानुसरणमनेकांशेषु करोति । अपि च कात्यायनश्रौतसूत्रस्यापि प्रभाव अस्योपरि विशेषोऽस्ति । कौशिकगृह्यसूत्रमथर्ववेदस्यैकमात्रं गृह्यसूत्रमस्ति । इदं सूत्रं चतुर्दशाध्यायेषु विभक्तमस्ति । अस्योपरि 'हारिल'स्य केशवस्य च सङ्क्षिप्ताः व्याख्याः समुपलब्धा भवन्ति । ग्रन्थोऽयं प्राचीनभारतीयायाः 'यातुविद्यायाः' परिज्ञानायानुपमेयां सामग्रीं प्रस्तौति । याः सामग्र्योऽन्यत्र दुर्लभाः सन्ति । साहाय्येनास्य ग्रन्थस्य वयमथर्ववेदस्य नानाविधानामनुष्ठानानां विधि-विधानानि पूर्णरूपेण ज्ञायन्ते । अतोऽस्यानुशीलनस्याभावेऽथर्ववेदस्योन्मीलनं न भवति । एतदेवास्योपादेयताया बीजम् । आयुर्वेदशास्त्रस्यौषधाय त्वेतत् अक्षयं भाण्डागारमेवास्ति । तस्मात् महते कल्याणाय सूत्रमिदं प्रवर्तते ।

## धर्मसूत्रम्

धर्मसूत्राणि कल्पस्याविभाज्यान्यङ्गानि सन्ति । संविधानतः प्रत्येकस्याः शाखायाः स्वविशिष्टं धर्मसूत्रं भवितव्यम् । परञ्च नैतादृशी स्थितिः । आश्वलायनस्य, शाङ्खायनस्य मानवशाखायाश्च श्रौतसूत्र-गृह्यसूत्रे चोभौ प्राप्येते, परञ्च तासां शाखानां धर्मसूत्रात्मकोंऽशो न प्राप्यते । आश्वलायन-धर्मसूत्रस्य शाङ्खायनधर्मसूत्रस्य च नितरामुपलब्धिर्न भवति । मानवधर्मसूत्रमपि, यस्याधारमादाय कालान्तरे मनुस्मृतेः निर्माणम-

भूत्, अधुनापि नोपलब्धमस्ति। केवलं बौधायन-आपस्तम्बहिरण्यकेश्यादीनां कल्पसूत्राणामुपलब्धिः पूर्णतया भवति। तेन एषां धर्मसूत्राण्यपि मिलन्ति। मीमांसकेन कुमारिलभट्टेन तन्त्रवार्त्तिके विभिन्नवेदानां धर्मसूत्राणां प्रामाणिको निर्देशः कृतः। गृह्यसूत्राणि पाकयज्ञस्य संस्काराणाञ्च विशेषरूपेणोपनयन-विवाह-श्राद्धानां वर्णनं कुर्वन्ति। धर्मसूत्राण्यपि एषां विषयाणां वर्णनं सुनिश्चितं कुर्वन्ति, परञ्च दृष्टिभेदेन। गृह्येऽनुष्ठानानामाकार-प्रकारे विधाने च विशेषाग्रहो भवति, धर्मसूत्रे चैतद्विपरीतमाचार-कर्त्तव्यकर्म-व्यवहाराणां महत्त्वं भवति। धर्मसूत्रे चतुर्वर्णानां कर्त्तव्यकर्मव्यवहारेण सह राजधर्मस्य वर्णनं मुख्यमस्ति। राज्ञः कर्त्तव्यम्, प्रजया सह सम्बन्धः, व्यवहारस्य नियमः, अवस्थाविशेषे प्रायश्चित्तस्य विधानं धर्मसूत्राय महत्त्वप्रदानं करोति। विवाहस्यानेकविधानामुभयत्र वर्णनमस्ति, परञ्च गृह्यसूत्रस्य मुख्यमुद्देश्यं केवलं तस्य धार्मिकपद्धतेः अनुष्ठान-प्रकारस्य च विवरणे नास्ति। धर्मसूत्रे विवाहोत्पन्नपुत्राणां मध्ये सम्पद्विभाजनस्य मुख्यः प्रश्नः। दायभागस्य विचारः, स्त्रीणां पारतन्त्र्यम्, व्यभिचाराय प्रायश्चित्तम्, नियोगस्य नियमः, गृहस्थस्य नित्य-नैमित्तिककर्मणां वर्णनं सर्वेषु धर्मसूत्रेषु नियमतः स्वल्पमात्रायामथवाऽधिकमात्रायामुपलभ्यते। एषामेव धर्मसूत्राणां सङ्क्षेपतमं वर्णनमत्र प्रस्तूयते।

( १ ) **गौतमधर्मसूत्रम्**—प्राप्तधर्मसूत्रेषु प्राचीनतमोऽयं ग्रन्थः स्वीक्रियते। यस्य सम्बन्धः कुमारिलभट्टस्य प्रामाण्ये सामवेदेन सह विद्यते। चरणव्यूहे निर्दिष्टाया राणायनीयशाखाया नव ( ९ ) अवान्तरशाखासु गौतमोऽन्यतमो विद्यते। गोभिलेन गृह्यसूत्रे गौतमः स्मृतः। प्राचीनेषु धर्मशास्त्रकारेषु केवलं मनोः उल्लेखोऽत्र मिलति। बौधायनधर्मसूत्रे न केवलमस्योल्लेख एव प्राप्नोति अपितु प्रस्तुतस्य तृतीयप्रश्नस्य दशमाध्याये गौतमधर्मसूत्रस्यैकोनविंशतितमादध्यायात् प्रायश्चित्तविषयिकाः सर्वाः सामग्र्यो गृहीताः सन्ति। अनेनैव प्रकारेण वशिष्ठधर्मसूत्रस्य द्वादशाध्यायो गौतमस्यैकोनविंशतितमादध्यायात् गृहीतोऽस्ति। अस्मिन् ग्रन्थे अष्टविंशत्यध्यायो सन्ति, येषु वर्णधर्मस्य, राजधर्मस्य, नित्यकर्मणां प्रायश्चित्तस्य च सविशेषं प्रतिपादनमस्ति। गौतमधर्मसूत्रस्य निर्देशो याज्ञवल्क्येन, कुमारिलभट्टेन, आद्यशङ्कराचार्येण मेधातिथिमहाशयेन च कृतः। अस्य कालः ६०० वैक्रमाब्दात् पूर्वं, ४०० पूर्वं वैक्रमाब्दमध्ये निश्चेतुं शक्यः। हरदत्तेन स्वव्याख्यया, आचार्येण मस्करीमहाभागेन च स्वभाष्येण चास्यार्थं सरलीकृत्य विषयो बोधगम्यः कृतः। सूत्रमिदं हरदत्तस्य व्याख्यया आनन्दाश्रमात् पुण्यपत्तनस्थितात् मस्करीभाष्येण च सह महीशूरात् प्रकाशितमस्ति।

( २ ) **बौधायनधर्मसूत्रम्**—एतत्तेषां कल्पसूत्रस्यैवांशमात्रमस्ति। बौधायनधर्मसूत्रे चत्वारः प्रश्नाः खण्डानि वा सन्ति। तत्र प्रथमे प्रश्ने ब्रह्मचर्यस्य, शुद्धाशुद्धविचारस्य, राजकीयविधेः, अष्टविधानां विवाहानाञ्च वैशद्येन वर्णनं विद्यते। द्वितीयः प्रश्नः प्रायश्चित्तस्य, उत्तराधिकारस्य, चतुर्णामाश्रमाणां, गृहस्थधर्मस्य श्राद्धस्य च विवरणं प्रददाति। तृतीये प्रश्ने वैखानसस्य संन्यासिनश्च धर्माणां चान्द्रायणादिव्रतानाञ्च विधानमस्ति। चतुर्थे प्रश्ने च काम्यसिद्धीनां वर्णनमस्ति। एषु प्रश्नचतुष्टयेषु—अन्तिमस्य प्रश्नस्य भाषा शैली च प्रथमतः त्रिभ्यः प्रश्नेभ्यः पार्थक्यं समर्थयति।

एतन्मुख्यरूपेण श्लोकबद्धमस्ति। अपि च तद्वर्णिता विषयाः पूर्वप्रश्नेषु प्रतिपादितानां विषयाणामावृत्तिं कुर्वन्ति। अत एव चतुर्थः प्रश्नः पश्चात्काले संलग्नः प्रतीयते। तृतीयप्रश्नस्य मौलिकतायामपि सन्देहः क्रियते। अस्य प्रश्नस्य दशमाध्यायो गौतमधर्मसूत्रस्यैकोनविंशतितमाध्यायेन सह पूर्णसमतां धारयति। अतः प्रारम्भिकस्य द्वावपि प्रश्नौ ग्रन्थस्य मौलिकांशौ मन्येते। बौधायनगृह्यसूत्रस्य रचनां तद्धर्मसूत्रस्य रचनातः प्राचीना स्वीकर्त्तव्या। यतस्तन्निर्देशो धर्मसूत्रे वारद्वयं कृतः।

तैत्तिरीयशाखाया बौधायनकल्पसूत्रं समस्तस्य कल्पसाहित्यस्येतिहासे प्राचीनतममस्ति इत्यस्यानेकानि पुष्टप्रमाणान्युपलभ्यन्ते। तैत्तिरीयसंहितायाः टीकाकर्त्रा भट्टभास्करमिश्रेण स्वटीकायाः प्रारम्भे प्राचीनग्रन्थकारेषु बौधायनस्य नाम्ना उल्लेखः कृतः। भास्करमिश्रस्याथापि कथनमस्ति यत् तेन भवस्वामिनस्तथाऽन्यटीकाकाराणां व्याख्यानामध्ययनानन्तरं संहितायां स्वटीका लिखिता। इमे 'भवस्वामिनः' बौधायनश्रौतसूत्रस्यातिप्राचीना भाष्यकाराः सन्ति। अस्मिन् विषये एकमन्यत्तथ्यं महन्महत्त्वं धारयति तच्चेदमस्तीति यद् बौधायनशाखानुयायिनामुत्सर्जनविधेः वर्णनावसरे बौधायनः 'प्रवचनकार' इति कथितः। यदा हि अन्यसूत्राणां रचयितारः सूत्रकाराः स्वीकृताः सन्ति। 'प्रवचनेन तात्पर्यमिदमस्तीति यद् बौधायनेन श्रौतविषयाणां सविध्युपदेशः प्राथम्येन कृतः। 'उपदेश आद्योच्चारणमि'ति **पाणिनिः**। फलतस्ते स्वविषयस्य मौलिका ग्रन्थकाराः सन्ति। एतद्भिन्नैः आचार्यैः पूर्वोपलब्धायाः सामग्र्याः निवेशः सूत्रेषु कृतः। फलतस्तेषां कार्यं मौलिकानुशीलनं न विद्यते, केवलं सङ्कलनमात्रमेवास्ति। एषां भाषा पाणिनीयसंस्कृतात् भिन्नतां धत्ते। अपि च प्राचीनानां धर्माचार्याणां नाम्नां मतानाञ्चोल्लेखः ग्रन्थे प्राप्यते। आपस्तम्बस्य वशिष्ठस्य चानेकानि धार्मिकसूत्राणि बौधायनेनाक्षरशः प्राप्यन्ते। येन बौधायनस्योपर्युक्तयोर्द्वयोरपेक्षया प्राचीनतर इत्यनुमानेन सिद्ध्यति। अत एवास्य समयो विक्रमपूर्वपञ्चमशतकस्य नैकट्ये स्वीकारः समुचितः। अपरञ्च गोविन्दस्वामिनो भाष्येण सह काशीसंस्कृतसीरीजे प्रकाशितमस्ति।

**बौधायनस्य जन्मस्थानम्**—डॉ० ब्यूलरमहाशयेन बौधायनस्य जन्मस्थानं दक्षिणभारते स्वीकृतम्। अस्य विषयस्य तत्साधकं प्रमाणं नितान्तं दुर्बलं भ्रान्तञ्चास्ति। साम्प्रतं बौधायनशाखाध्येतॄणां सत्ता दक्षिणभारतस्यान्ध्रप्रदेशे एवास्ति, अन्यत्रेमे समुपलब्धा न भवन्ति। बौधायनसूत्रस्य हस्तलेखा अपि विशेषतो दक्षिणभारते एव प्राप्याः सन्ति नान्यत्र। ब्यूलरस्य एतद् द्वावपि तर्कौ महत्त्वहीनौ स्तः। साम्प्रतिककालस्थित्या अतिप्राचीनकालस्य स्थितेः अनुमानं समुचितं नास्ति। अत्रात्यधिका सम्भावना विद्यते यदिमे पूर्वयुगेषु स्वमूलस्थानात् दक्षिणे समागताः स्युः। सम्भाव्यते यदुत्तरभारते यवनानामाक्रमणेन हस्तलेखानां सुरक्षायाः सम्भावना नासीत्। अतो यदि ते हस्तलेखा दक्षिणभारते सुरक्षितास्तिष्ठन्ति। तदाऽत्र किमाश्चर्यम्। उत्तरभारतस्य निश्चितनिवासिनो ग्रन्थकारस्य कौटिल्यस्यार्थशास्त्रस्योपलब्धिर्दक्षिणभारतादेवाभूदिति किमत्र चित्रम्। बौधायनेन समुद्रयात्रा पतनीयकर्मसु गणिता, यामुत्तर-

भारतीयाः समाचरन्ति स्म तस्मिन् युगे। कथनेनानेन ते दक्षिणभारतीयाः स्वीकृताः। अपरश्च ब्यूलरस्यायमपि तर्कः प्रमाणसिद्धो नास्ति, प्रत्युत एतदस्य तथ्यस्य सूचकमस्ति यत्तस्य कालस्योत्तरभारतीयाः समुद्रयात्राकर्तारः साहसिका जना आसन्। तथ्यन्त्विदमस्ति यत् बौधायनसूत्रेषु प्रयुक्तोदीच्यदाक्षिणात्ययोर्विभाजकरेखा नैव विन्ध्यपर्वतोऽपि तु आर्यावर्तस्य प्रदेश एवासीत्। बौधायनः आर्यावर्तस्याचारं प्रमाणभूतं स्वीकरोति स्म। स च प्रदेशस्तयोः केन्द्रबिन्दुः, यस्मात् स्थानात् उदीच्यदाक्षिणात्ययोर्विभाजनस्य सीमा आरभ्यते। अन्यच्च आर्यावर्तस्याचारस्तु बौधायनस्य विचारे 'प्रकृति आचार' इत्यादर्शाचारः आसीत्। तद्विकृतानामाचाराणां—भवन्तु नाम ते आचाराः आर्यावर्तादुत्तरे भवेयुर्दक्षिणे वा—बौधायनेन स्पष्टोल्लेखः कृतः। तन्मते आर्यावर्तस्य सीमानिर्देशः इत्थं वर्तते। तद्यथा—'प्रागदर्शनात् प्रत्यक् कालकवनात् दक्षिणेन हिमवन्तमुदक् पारियात्रमेतावत् आर्यावर्तम्। तस्मिन् य आचारः स प्रमाणम्। गङ्गायमुनयोरन्तरमित्येके।' अत्रार्यावर्तस्य विषये मतद्वयस्योल्लेखो विद्यते। तदनुसारं बौधायनस्य जन्मस्थानमयमेवार्यावर्तप्रदेशः प्रतीयते। यत्रत्याचारस्य प्रामाण्यं मनुस्मृतौ महाभारते चाप्युल्लिखितमस्ति। ते आर्यावर्तस्य समीपस्थस्थानेभ्योऽपि परिचयं धारयन्ति। निष्कर्षश्चात्र विद्यते यद् बौधायनस्यात्यन्तं परिचितस्तथा चर्चितो भूभागः उत्तरीयभारतस्यार्यावर्त एव तस्य निवासस्थानमासीत्। इयमेव स्थितिर्हिरण्यकेशीमहाशयस्यासीत्। हिरण्यकेशीगृह्यसूत्रे सीमन्तोन्नयनप्रसङ्गस्य गाथा गङ्गाया उल्लेखं कृत्वा तमस्यैव प्रदेशस्य निवासिनं स्वीकरोति। तद्यथा तत्प्रमाणम्—

'सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः।
विवृतचक्रा आसीनास्तीरे तुभ्यं गङ्गे'॥

(३) **आपस्तम्बकल्पसूत्रम्**—इत्यस्य द्वौ प्रश्नौ आपस्तम्ब-धर्मसूत्रयोर्नाम्ना विख्यातौ स्तः। बौधायनस्यापेक्षयाऽस्य भाषाधिका प्राचीना अपाणिनीया च नास्ति। अपि चानेकाप्रचलितानां विरलानां शब्दानामप्यत्रोपलब्धिर्नास्ति, येनास्य प्राचीनतासिद्धिर्न भवति। संहिताया अनन्तरं ब्राह्मणानामनेकान्युद्धरणानि प्रदत्तानि सन्ति। तैः प्राचीनधर्मस्योपरि दशग्रन्थकाराणां नाम्नां मतानाञ्चोल्लेखः कृतः। येषु काण्व-कुणिक-कुत्स-कौत्स-पुष्करसादि-वार्ष्यायणि-श्वेतकेतु-हारीतादयो मुख्याः सन्ति। तथैवापस्तम्बधर्मसूत्रे मीमांसायाः पारिभाषिकशब्दानां मीमांसासिद्धान्तस्य चाधिको निर्देशो मिलति। अपि चानेकविषयेष्वस्य निर्णयो जैमिनिना साम्यं धारयति। आपस्तम्बग्रन्थे धर्मशास्त्रस्यानेकमाननीयविषयाणां सिद्धान्तानाञ्च विवेचनमस्य व्यापकदृष्टेः परिचायकमस्ति। महर्षिणा गौतमेन वर्णसाङ्कर्ययुक्तानां जातीनां वर्णनं कृतम्, परञ्चापस्तम्बोऽस्मिन् विषये मौनभावं धारयति। इमे नियोगस्य निन्दां कुर्वन्ति प्राजापत्यविवाहञ्च समुचितो विवाह इत्यस्मिन् पक्षे सन्ति। एषां कालो बौधायनात्पश्चाद्वर्ती स्वीकर्त्तव्यः।

आपस्तम्बस्य निवासस्थानविषये विद्वत्सु मतभेदस्तिष्ठति। डॉ० बूलरमतेनायं दक्षिणभारतस्य ग्रन्थकारः सिद्ध्यति। आपस्तम्बेन स्वधर्मसूत्रे आसनोपविष्टाना

पुरुषाणां हस्ते जलार्पणां श्राद्धीयप्रथामुदीच्यानां सम्प्रदाय इति कथितः, तद्यथा—'उदीच्यवृत्तिश्चेदासनगतेषूदपात्रानयनमिति । अस्मिन्नेव प्रमाणे ब्यूलरेण सोऽयं दाक्षिणात्यः प्रमाणीकृतः । परञ्च वस्तुस्थितिः विपरीता वर्तते ।

( क ) विविधैः प्रमाणैस्ते उत्तरदेशीयाः प्रतीयन्ते । सीमन्तप्रकरणे वीणागायकान् अनयोर्मन्त्रयोः गायनस्य विधानं कृतमस्ति—

'यौगन्धरिरेव नो राजेति साल्वीरवादिषुः ।
विवृत्तचक्रा आसीनास्तीरेण यमुने तव ।।
सोम एव नो राजेत्याहुर्ब्राह्मणी प्रजाः ।
विवृत्तचक्रा आसीनास्तीरेणासौ तव' ।।

अस्य प्रथमे मन्त्रे यमुनायास्तटे निवसन्तीनां साल्वदेशीयप्रजानामुल्लेखः ऐतिहासिकं महत्त्वं स्थापयति । साल्वदेशो वस्तुतो रावीनद्याः निकटे पञ्चनदप्रदेशस्यैकोंऽश आसीत् । शाब्दिकेन पाणिनिना साल्वदेशस्योल्लेखो राजशासितस्य जनपदस्य स्वरूपे कृतस्तथा साल्वदेशस्यावयवस्यापि निर्देशस्तैः स्वसूत्रे 'साल्वावयवप्रत्यग्रथ-कलकूटाश्मकादिञ्' इत्यत्र विहितः । अपि चैषामवयवानां नाम्नां निर्देशः अस्यैव सूत्रस्य काशिकायां विद्यते, तद्यथा—

'उदुम्बरास्तिलखला भद्रकारा युगन्धराः ।
भूलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः' ।।

एष्ववयवेषु युगन्धरस्य राज्ञः उल्लेखः उपरिनिर्दिष्टे आपस्तम्बगृह्यस्य प्रथमे पद्ये 'यौगन्धरिः' इत्यत्र विद्यते । अस्योल्लेखस्य कर्ता आपस्तम्बो यमुना-साल्वदेशाभ्यां परिचितः कोऽप्युत्तरभारतीयो जनः । नास्त्यत्र सन्देहावसरः ।

( ख ) श्रौतसूत्रे आपस्तम्बेन कुरुक्षेत्रस्य समीपवर्तिनां प्रख्यातस्थानानां नाम्ना निर्देशः कृतः । तेषु महत्त्वपूर्णानि स्थानानि सन्ति—परिणः, प्लाक्षप्रस्रवणः, त्रिप्लक्षः, अप्ययश्च ( द्वषद्वतीनद्याः लुप्तस्थानानि ) । अपरञ्च ते कुरूणां पञ्चालानाञ्च बहुशः उल्लेखाः कुर्वन्ति, तथैव तन्निमित्तानां विशेषयज्ञानामपि । तेन नैमिषारण्यनिवासिभ्योऽपि यागविधानस्योल्लेखः कृतः । परिणामतः आपस्तम्बश्रौतसूत्राणां भौगोलिको देशः कुरुक्षेत्रं, तन्निकटवर्तिनो भूक्षेत्रम् । इत्यनेन सिद्धयति—उत्तरभारतमापस्तम्बस्य विशेषपरिचितं स्थानमस्ति । एतद्विपरीतमेषु सूत्रेषु दक्षिणभारतस्य देशस्य तत्रत्यनिवासिनाञ्च विषये कोऽपि निर्देशो न मिलति ।

( ग ) एषु सूत्रेषु प्रयुक्ताः शब्दाः संस्कृते अप्रसिद्धास्तथा कुरुपाञ्चालस्य देशभाषायामद्यापि प्रचलिताः सन्ति । आपस्तम्बश्रौतसूत्रे अश्वाय प्रयुक्तः घोटशब्दो हिन्दीभाषायाः 'घोड़ा' इत्येवास्ति । तथैवारण्यमेषस्यार्थे प्रयुक्तः 'भयेडक'शब्दः हिन्दीभाषायाः 'भेड़ा'शब्देन साम्यं स्थापयति । द्राविडीभाषायाः कोऽपि शब्दः प्रयुक्तो नास्ति । डॉ० गार्वेमहाशयस्येदमनुमानं यत्—तम्बलवीणायाः प्रयोगः तमिलदेशीयवीणायै सूत्रेषु कृत इत्यप्रामाणिकः । गोभिलगृह्यसूत्रे ब्रह्मचारिणो विभिन्नवर्णानां रसनाविधानाय 'तम्बल'शब्दस्य प्रयोगो दृश्यते यत्र टीकाकारेण भट्टनारायणेन

तम्बलस्यार्थः 'शण' इति कृतः, तद्यथा—'मुञ्जकाशौ प्रसिद्धौ तम्बलः शण उच्यते'। जैमिनीयगृह्यसूत्रं वैश्याय 'तमल'निर्मिता रशना इत्यस्य विधानं करोति। श्रीमता हरदत्तेन स्वटीकायां तमलं मूलोदकसंज्ञकस्तरुः स्वीकृतः। तथा च—तमलो मूलोदकसंज्ञो वृक्षः, तस्य त्वचा तामली इति। गोपीनाथभट्टास्तु ताम्बली-तामलीशब्दौ पर्यायवाचिनौ स्त इत्यामनन्ति। तमलोऽथवा तम्बलो वृक्षविशेषस्याभिधानमस्ति। फलतः आपस्तम्बश्रौतसूत्रे प्रयुक्तस्य 'तम्बलवीणा'शब्दस्यार्थः—तम्बलवृक्षस्य त्वग्निर्मिता वीणा विद्यते। अतोऽमुं शब्दं द्राविडीभाषायाः शब्दः इति कथनं नितान्तमनुचितमस्ति।

एभिः प्रमाणैः आपस्तम्बस्य जन्मस्थानम् 'उत्तरभारतम्'निश्चितरूपेणास्ति दक्षिणभारतस्य न भवितुमर्हति—इति निष्कर्षः।

( ४ ) **हिरण्केशिधर्मसूत्रम्**—अस्याः शाखायाः कल्पसूत्रस्य द्वौ प्रश्नौ स्तः। नायं स्वतन्त्रो ग्रन्थो भवितुमर्हति। वस्तुतस्त्विदं धर्मसूत्रमापस्तम्बधर्मसूत्रस्यैव सङ्क्षिप्तं प्रवचनमस्ति। एभिः आपस्तम्बात् शतशः सूत्राणि अक्षरशः स्वग्रन्थे समुद्धृतानि सन्ति। एषां सूत्राणां पाठः पाणिनेः विशेषानुकूलो विद्यते। एषां टीकाकारैः महादेवैः अनेकस्थलेषु हरदत्तस्यापेक्षया एकाधिकावश्यकविषयाणां वर्णनं कृतम्। ये विशेषोपादेयाः सङ्ग्राह्याश्च सन्ति।

( ५ ) **वशिष्ठ-धर्मशास्त्रम्**—सूर्यवंशकुलगुरोर्महर्षेर्वशिष्ठस्य धार्मिकजगति महत्त्वपूर्णं स्थानमस्ति। एते महान्तः अस्माकं स्मृतिकारेषु आदरार्हे उच्चस्थाने प्रतिष्ठिता धर्मसूत्रकाराः सन्ति। येषां धर्मशास्त्रं मात्रायां स्वल्पकायेऽपि गुणेषु विपुलं महनीयञ्चास्ति। सुप्रसिद्धमीमांसकाः कुमारिलभट्टाः स्वीये तन्त्रवार्त्तिके वशिष्ठधर्मशास्त्रस्य सम्बन्धः ऋग्वेदेन सह कथयन्ति, परञ्चायं प्रायोवादः। ऋग्वेदिनां पार्श्वे स्वस्वतन्त्रं धर्मशास्त्रं नासीत्। फलतः स्वतन्त्ररूपेण निर्मितममुं धर्मशास्त्रं स्वायत्तीकृत्य एतैः अस्योपरि स्ववेदस्य चिह्नं स्थापितम्। अस्य ग्रन्थस्य प्रायश्चित्तप्रकरणे यथा ऋग्वेदस्य 'अयवामीय'-'हविष्पान्तीय'-'अघमर्षण' सूक्तस्य च मन्त्राणामुल्लेखो विद्यते, तथैव तैत्तिरीयसंहिताया अपि अनेकमन्त्राणां निःसन्दिग्धमुद्धरणं विद्यमानमस्ति। एतत् सत्यमस्ति यत्—वाशिष्ठधर्मशास्त्रं ऋग्वेदस्याङ्गं नासीत्। तथापि ऋग्वेदेन सहास्य धर्मशास्त्रस्य सम्बद्धता-स्वीकरणाय तर्कस्य न्यूनता नास्ति। एतद् ध्यातव्यं यत् वाशिष्ठधर्मशास्त्रं गृह्यविषयेभ्यः ( यथोपनयन-अनध्याय-स्नातकस्य नियमाः, पञ्चमहायज्ञादयः ) साङ्ख्यायनगृह्यसूत्रेण सह घनिष्ठं सम्बन्धं स्थापयति। वाशिष्ठधर्मशास्त्रस्यानेकानि सूत्राणि ऋग्वेदस्य त्रिभिर्गृह्यैः साङ्ख्यायन-आश्वलायन-कौषीतक्यादिभिः सहाश्चर्यजनिकां समतां स्थापयन्ति। एतादृश्यामवस्थायां वाशिष्ठधर्मशास्त्रमृग्वेदस्य सम्बद्धतापरिबृंहितं, स्वीकारे विशेषा विप्रतिपत्तिर्न भवितव्या। वशिष्ठस्य मूलं धर्मशास्त्रं कालप्रवाहे परिबृंहितं परिवर्धितं परिवर्त्तितञ्चाभूत्। यतो हि हस्तलेखेषु अध्यायानां संख्या एकसदृशी नास्ति। क्वचित् ६, क्वचित् २, कुत्रचिच्च त्रिंशदध्यायानां प्राप्तिः अस्य परिबृंहणस्य परिचायिका विद्यते। त्रिंशदध्याययुक्तोऽयं ग्रन्थः अद्यत्वे प्रमाणभूतः सर्वत्रोपलब्धो भवति।

गौतमधर्मशास्त्रेण सहास्य ग्रन्थस्य विशेषः सम्बन्धः परिलक्षितो भवति । वशिष्ठ-धर्मसूत्रस्य विंशतितमोऽध्यायो गौतमधर्मसूत्रस्य च एकोनविंशतितमेऽध्याये महत्साम्य-मस्ति । अन्यत्राप्यर्थतः शब्दतो वा समानताया अभावो नास्ति । प्रमाणानामभावे कठिनोऽयं निर्णयो यत् कः केन समुद्धृतो भवति—वशिष्ठो गौतमात् ? उत गौतमो वशिष्ठात् ? अत्यधिका सम्भावना विद्यते यत्—समादरणीयमेतद्धर्मशास्त्रद्वयं तद्-युगस्य रचने स्यातां, यस्मिन् युगे पारस्परिकमादानप्रदानं न्याय्यमासीत् । साम्प्रतं मनुस्मृतौ वशिष्ठधर्मशास्त्रे च दश श्लोका अक्षरशः समानाः सन्ति । मनुस्मृतेः श्लोका अत्र गद्यात्मकसूत्रेषु परिणता दृष्टिगोचरा भवन्ति । अतो विदुषां बलवती धारणा विद्यते यत्—वशिष्ठस्य धर्मशास्त्रमेव वर्तमानकाले प्राप्तमनुस्मृतेरस्य प्राचीनविशुद्ध-मूलरूपाद्वा एतान् श्लोकान् समुद्धरति । स्मृतिकारस्य वशिष्ठस्य ख्यातिः प्राचीनेषु स्मृतिग्रन्थेषु बहुशः प्राप्नोति । याज्ञवल्क्येन स्वस्मृतौ प्राचीनेषु स्मृतिकारेषु वशिष्ठ-स्योल्लेखः कृतः । कुमारिलेनाप्यस्य सादरं निर्देशः तन्त्रवार्तिके कृतः । अपि च विश्वरूपेण याज्ञवल्क्यस्मृतेष्टीकायां मेधातिथिना च मनुभाष्ये वशिष्ठधर्मशास्त्रस्य मतानामुद्धरणं ससम्मानं बहुशः कृतम् । एतेनेदं स्पष्टं भवति यदस्याः स्मृतेः समादरं धर्मशास्त्रस्येतिहासे प्रामाण्यस्योपयोगस्य च दृष्टयाऽधिकं क्रियते स्म । अत्र विशेषतो ध्यातव्यमस्ति यद् वशिष्ठो वृद्धवशिष्ठश्च एतन्नामकौ द्वावपि स्वतन्त्रौ स्मृतिकाराव-भूताम् । वृद्धवशिष्ठस्य कोऽपि स्वतन्त्रो ग्रन्थो यद्यप्यद्यापि नोपलब्धस्तथापि अवान्तर-कालीन-भाष्याणां निबन्धकाराणाञ्च साक्ष्ये वृद्धवशिष्ठस्य ग्रन्थस्य सत्ता ( स्थितिः ) निश्चितरूपेण प्रमाणिता भवति । विश्वरूपेण याज्ञवल्क्यस्यैकस्य श्लोकस्य ( १।१९ ) टीकायां वृद्धवशिष्ठस्य मतस्योल्लेखः कृतः । मिताक्षरायां ( २।१९ ) 'जयपत्रस्य' लक्षणमेषां ग्रन्थात् समुद्धृतमस्ति । स्मृतिचन्द्रिकायामनुमानतो विंशतिः श्लोकाः आह्निकस्य श्राद्धस्य च विषये उद्धृताः सन्ति । एतेनायं निष्कर्षो निःसरति यत् वृद्ध-वशिष्ठस्य स्मृतिरपि प्राचीना विद्यते । या याज्ञवल्क्यस्मृतिरिवाचारेण सह समस्तानां व्यवहाराणामपि विशेषवर्णनं करोति । ग्रन्थाभावे वयं वशिष्ठस्य वृद्धवशिष्ठस्य च पारस्परिकसम्बन्धस्य विषये किमपि कथयितुं न पारयामः । वशिष्ठस्य श्लोकबद्धा स्मृतिः अधुनापि प्रकाशिता न वेति—इत्यस्मिन् विषये मम ज्ञानमपर्याप्तं विद्यते । परञ्चास्य हस्तलेखास्तु प्राप्यन्त एवेति ।

इयं स्मृतिः परिमाणेऽलमतिविस्तृता विद्यते । अस्याः स्मृतेः दशाध्यायेषु ११०० श्लोकाः सन्ति । येषु स्मृतिसम्बद्धानां नानाविषयाणां—यथा स्त्रीधर्म-श्राद्ध-अशौच-विष्णुमूर्तिप्रतिष्ठा-विष्णुपूजनादीनां विस्तृतं विवेचनमस्ति ।

**वशिष्ठस्य धार्मिकं मतम्**—स्मृतिकारस्य वशिष्ठस्य सिद्धान्तस्य मतस्य चाद्यत्वे परिज्ञानस्यैकमात्रं साधनमस्ति तेषां धर्मशास्त्रम् । यद्धि त्रिंशदध्यायेषु विभक्तं विशेषतः सूत्रेषु रचितमस्ति । क्वचित्क्वचित् श्लोका अपि प्रदत्ताः सन्ति । आचारस्य, व्यवहारस्य, प्रायश्चित्तस्य चेति त्रयाणां विषयाणां वर्णनं पूर्णतां ख्यापयति । प्रारम्भिकस्य चतुर्दशाध्यायेषु—आचाराणाम्, मध्यवर्तिनां पञ्चाध्यायेषु ( १५–१९ ) व्यवहारस्य, अवसाने चैकादशाध्यायेषु ( २०–३० ) प्रायश्चित्तस्य महत्त्वपूर्णं वर्णनं

ग्रन्थस्योपादेयतायाः स्पष्टं प्रमाणमस्ति । वशिष्ठेन स्वमतानां प्रतिपादनं स्वल्पे ( सूत्रशैल्याम् ) परञ्चातिसुस्पष्टभाषायां कृतमस्ति । मौलिकविचारस्य प्रौढविवेचनायाश्च चिह्नं ग्रन्थस्य प्रतिपृष्ठे वर्तमानमस्ति । अन्येषां स्मृतिकाराणामिव वशिष्ठस्यापि पूर्णाग्रहः 'आचारे' वर्तते । आचार एव प्रतिमानवं समाजञ्च मान्यतां, दीर्घजीवनं सत्कारञ्च प्रापयति । शास्त्राभ्यासः, विद्याया उपार्जनं, विज्ञानस्योपार्जनमवश्यमेव काम्यमुपादेयञ्च वस्तु विद्यते । परञ्च व्यवहारेण विना, अर्थात् आचाररूपपरिणत्या विना, एतत्सर्वं भारमात्रमेवास्ति । अत एव वशिष्ठस्यैतत् कथनं समीचीनं वर्तते यत्—

'आचारः परमो धर्मः सर्वेषामिति निश्चयः ।
हीनाचारपरीतात्मा प्रेत्य चेह च नश्यति' ॥

अत्रायमाशयो विद्यते यत्—आचारहीनाय जनाय लोकद्वयं नष्टं भवति । तथा चोक्तम्—

'आचारहीनस्य तु ब्राह्मणस्य वेदाः षडङ्गास्त्वखिलाः सयज्ञाः ।
कां प्रीतिमुत्पादयितुं समर्था अन्धस्य दारा इव दर्शनीयाः' ॥ स्पष्टमेतत् ।

अस्मिन्नेव प्रसङ्गे चतुराश्रम-स्नातकानां गृहस्थानाञ्च नियमानां विवेचनमतिसरलतया कृतमस्ति ।

त्रयोदशाध्याये श्रावणीकर्मणः, वेदाध्ययनस्य, अनध्यायस्य च विषया अपि सौष्ठवेन निबद्धाः सन्ति । चतुर्दशेऽध्याये भक्ष्याभक्ष्ययोर्निर्णयोऽपि तात्कालिकस्य समाजस्य रूपरेखापरिज्ञाने नितान्तं सहायकः सिद्धचति ।

भारतवर्षस्य सामाजिको जनः आर्यजातेरविच्छिन्नताया निरन्तरमभिलाषुक आसीत् । वैदिका आर्यगणा देवानां स्तुतिपाठानन्तरं तेभ्यः सुयोग्यपुत्रेभ्यः प्रार्थनां कुर्वन्ति स्म—'सुवीरासः स्याम' । लातिनीभाषायाः 'विरुस' शब्देन सम्बद्धः संस्कृते 'वीरस' शब्दः मुख्यतया पुरुषस्य द्योतकोऽस्ति । पुरुषेण सह 'पौरुषस्य' कल्पना संवलितत्वात् अस्य 'पराक्रमी' अर्थो गौणो विद्यते । अस्य मुख्यार्थोऽस्ति—मनुष्यः, पुत्रः—यस्मै वेदे बहुशः प्रार्थना विद्यते । 'प्रजातन्तुं मा व्यवच्छेत्सीः' 'अपुत्रस्य गतिर्नास्ति' इत्यादीनि श्रुतिवाक्यानि अस्यैव तथ्यस्य द्योतकानि सन्ति । अन्यस्मृतिकाराणामिव वशिष्ठोऽपि प्रजातन्तु-छेदनस्य निषेधं कुर्वन् आह—

'ऋणमस्मिन् संनयत्यमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेद् जीवतो मुखम्' ॥

अस्य सप्तदशाध्याये नानापुत्राणां लक्षणं तुलनात्मकमहत्त्वस्य च दृष्टचा चातिशयं महत्त्वपूर्णमस्ति । येन दायभागस्य निर्णयाय महत्साहाय्यं मिलति । वशिष्ठस्य कतिपयानि स्वतन्त्राणि मतानि सन्ति यानि प्राचीनतमेषु स्मृतिग्रन्थेषूपलब्धानि न भवन्ति । एतादृशेषु स्वतन्त्रमतेषु शूद्रया ब्राह्मणस्य विवाहनिषेधः, दत्तकस्य विधानं, व्यवहारस्य प्रसङ्गे 'लेखस्यापि साक्ष्ये उपयोगः' इत्येतानि मतानि महत्त्वपूर्णानि स्वीकृतानि । राज्ञः पुरोहितस्य च धर्मोऽपि वशिष्ठस्य दृष्टौ—अन्यस्मृतिकाराणामिव

गौरवं स्थापयति । एवमेव राज्ञः पुरोहितस्य चानुकूल्यमैकमत्यञ्च राष्ट्रस्य समृद्धेः मुख्यं कारणं प्रतिपादितमस्ति । भारतीय-राजनीतेः मूलसिद्धान्तोऽस्ति यत्—राष्ट्रस्य परिचालने क्षात्रतेजसा सह ब्रह्मत्वस्य पूर्णे सहयोगे प्राप्ते सति प्रदेशस्य राष्ट्रस्य च समृद्धिः सुनिश्चिता भवति । सत्यमुक्तं वशिष्ठेनास्मिन् विषये ब्राह्मणग्रन्थेभ्यः— 'ब्रह्म पुरोहितं राष्ट्रमृघ्नोतीति' । महाकविना कालिदासेनानेकशताब्द्यनन्तरमिमां राष्ट्रभावनां पवनस्य—अग्नेश्च सुपरिचितं दृष्टान्तं प्रदाय परिपुष्टीकृतम् । तद्यथा— रघुवंशे ( ८।४ ) प्रोक्तम्—

'स बभूव दुरासदः परैर्गुरुणाथर्वविदा कृतक्रियः ।
पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा' ।।

अत्रायमाशयः—राज्ञ एतत् मुख्यं कार्यमस्ति—देशस्य रक्षणमपराधिनाञ्च दण्डनम्, दण्डेन दण्डितोऽपराधी स्वपापैः मुक्तो भूत्वा निर्मलः सञ्जायते । अपि च पुण्यात्मनामिव स्वर्गं प्रयाति । भूपतिर्यदि अपराधिने दण्डं न ददाति तदा तत्पापं तं राजानमाकर्षति । अस्मात् कारणात् स्वकल्याणाय, समाजकल्याणायापराधिनः कल्याणाय चापि—अपराधिने दण्डदानं राज्ञ मुख्यं कर्त्तव्यं भवति । तद्यथा तत्रैव ( १९।४५ )—

'राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा' ।।

अन्तिमाष्टाध्यायेषु प्रायश्चित्तस्यावसरेऽनेकानां वैदिकमन्त्राणां जपस्य तैश्च मन्त्रैर्हवनस्य विशेषं विधानमपि मिलति । अन्तिमोऽध्यायः समग्र-धर्मशास्त्रस्य कुञ्चिकाऽस्ति—धर्ममहिम्नः प्रशस्तिरस्ति । प्राच्यभारतीयस्मृतिकाराणां स्वरं सम्मेल्य महर्षिर्वशिष्ठः इदमुच्चैर्घोषयति । तद्यथा—

'धर्मं चरत माऽधर्मं सत्यं वदत माऽनृतम् ।
दीर्घं पश्य मा ह्रस्वं परं पश्यत माऽपरम्' ।।

अत्रायं स्पष्टार्थः—वशिष्ठस्येयं शिक्षा समस्तमानवानां कल्याणाय प्रवर्तते । इमे महर्षयः आर्यसभ्यताया उन्नायकेषु महर्षिगणेषु—अन्यतमाः सन्ति । अस्मात् कारणादेव यूनानीसभ्यतया संस्कृत्या च परिचिता इमे महर्षयोऽस्मान् आर्यभाषासंस्कृतस्य पठन-पाठनायोपदिशन्ति । अनेन प्रकारेणान्तरङ्ग-बहिरङ्गप्रमाणानामाधारे वशिष्ठस्यास्य धर्मशास्त्रस्य कालो विक्रमपूर्वं—तृतीयशतकः स्वीकर्त्तव्यः । यस्मिन् काले भारतीया जना यूनानी-जनानां सभ्यतया, भाषया व्यवहारेण च प्रथमं परिचिता अभूवन् । यत्तु म्लेच्छभाषायाः शिक्षणस्य निषेधं कुर्वन्त्येते—'न म्लेच्छभाषां शिक्षेत्' इति कथयन्ति तत् संस्कृतभाषा-प्रवर्धनार्थमेवेति । सङ्क्षेपेण वयं कथयिष्यामो यत् महर्षेर्वशिष्ठस्य जीवनदर्शनं नितान्तमुदात्तमेकान्तकर्मनिष्ठं पूर्णत आध्यात्मिकञ्चास्ति । तेऽस्मान् स्वस्थान्, शिष्टान्, संस्कृतभारतीयान् विरच्य जीवनयापनस्योपदेशं प्रयच्छन्ति । तथैव तस्याः तृष्णायाः परिहारस्य शिक्षां ददति, यां तृष्णां दुर्बुद्धिः

काठिन्येन परित्यजति । या व्यक्तेः जीर्णेऽपि स्वयं जीर्णा न भवति, या च प्राणान्तिको व्याधिर्भवति । तथा च—

'या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
याऽसौ प्राणान्तिको व्याधिस्तां तृष्णां त्यजतः सुखम्' ॥

वशिष्ठस्य दृष्टौ 'दैवं' नितान्तं निरर्थकमस्ति । तेषां कथनमस्ति यत्—संसारे मृतशरीरातिरिक्तं सर्वेषु क्रिया दृष्टिगोचरा भवति, समुचितक्रियाभिश्चैव फलं प्राप्नोति । अत एव 'दैवस्य' कल्पनैव निरर्थका भवति, तथा चोक्तं योगवाशिष्ठे—

'न च निष्पन्दता लोके दृष्टेह शवतां विना ।
स्पन्दाच्च फलसम्प्राप्तिस्तस्माद् दैवं निरर्थकम्' ॥

( ६ ) **वैखानसधर्मसूत्रम्**—इदं धर्मसूत्रं वैखानस-स्मृतिसूत्रस्याष्टमो नवमो दशमश्च प्रश्नो विद्यते । एते त्रयः प्रश्ना मिलित्वा एतन्निष्पन्नं कुर्वन्ति । अस्य महती विशिष्टता विद्यते आश्रयाणां वर्णानाञ्च विशदं विवेचनम् । वानप्रस्थ-संन्यास-गृहस्थाश्रमाणामवान्तरभेदानामियत् विशदं वर्णनमत्रोपलब्धं भवति यदितरधर्मशास्त्रेषु प्राप्यं नास्ति । साङ्कर्ययुक्तानां जातीनां विशिष्टप्रकाराणामप्यत्र वर्णनं विद्यते । परञ्च राज्ञः कर्त्तव्यस्य, न्यायविधानस्य, श्राद्धस्यानुष्ठानादेः, धर्मशास्त्रेषु नियमतः प्राप्तविषयाणाञ्चात्र सर्वथाऽभावो विद्यते । अस्य श्लोका मनुस्मृतिपद्यैर्विशेषं साम्यं धारयन्ति । वैखानसगृह्यस्यापि वैशिष्टचं ध्यातव्यमस्ति । अस्य सम्पादनमांग्लभाषानुवादेन सह डॉ० कैलेण्डमहाशयेन निष्पादितम् ।

( ७ ) **विष्णुधर्मसूत्रम्**—एतदेवैकं धर्मसूत्रमस्ति यत्—कस्यापि मानवग्रन्थकारस्य नैव रचना, अपि तु स्वदिव्योत्पत्तौ श्रद्धां विदधाति । अत्र गद्यात्मक-सूत्राणां पद्यानाञ्चैकत्र सन्निवेशो विद्यते । अस्य स्वरूपस्य विषये पर्याप्तो मतभेदो दृश्यते । मनुस्मृत्या सहास्य सम्बन्धस्य पौर्वापर्यविप्रतिपत्तेश्च विषयो विद्यते । अस्य धर्मसूत्रस्य १६० श्लोकाः 'मनुस्मृतौ' अक्षरशः प्राप्यन्ते, तथा चास्यानेकानि सूत्राणि स्वविषयविवेचनस्य निमित्तं मनुस्मृति-पद्यैः साम्यं धारयन्ति । अस्य ग्रन्थस्य सम्पादकः अमुं धर्मसूत्रं मनुस्मृत्या प्राचीनतरं स्वीकरोति, परञ्च द्वयोस्तुलनायां विष्णुधर्मसूत्रमेव मनुस्मृतेः अधमर्णं प्रतीयते । यतस्तेन मनोः अनेकश्लोकानां यत्र-तत्र परिवर्तनं विधाय स्वस्मिन् सम्मेलनं कृतम् । सैषा स्थितिः अनेकत्र दृश्यते । अनेन प्रकारेण शतशः स्थलानां सत्ता एतदेव सूचयति यत्—विष्णुधर्मसूत्रस्य रचना पश्चाद्वर्त्तिनी विद्यते । येन धर्मसूत्रकारेण स्वप्रतिष्ठायै प्रामाण्याय च मनोः श्लोकानां किञ्चिद् परिवर्तनं विधायोपयोगः कृतः । अनेनैव प्रकारेण याज्ञवल्क्यस्मृतेः गौतमधर्मसूत्रस्य, वशिष्ठधर्मसूत्रस्य, भगवद्गीतायाश्च श्लोकाः सूत्राणि चाक्षरशोऽथवा किञ्चित् परिवर्तनेन सहात्रोपलब्धानि सन्ति । काठकगृह्यसूत्रस्यापि वैश्वदेव-बलि-श्राद्ध-वृषोत्सर्गविषयकैरनेकैः सूत्रैः सहात्र साम्यमुपलब्धं भवति । एतादृश्यामवस्थायां विष्णुधर्मसूत्रस्य प्राचीनता मौलिकता च संशयापन्ना विद्यते । तथ्यन्त्विदमेव प्रतीयते यत् अनेनैवोपरिनिर्दिष्टेभ्यो ग्रन्थेभ्यः सामग्रीमादाय स्वकलेवरं सज्जीकृतम् । इदं साम्यमस्ति

क्वचिदक्षरशः क्वचिच्चांशतः, परञ्चास्त्येव। फलतः अमुं पञ्चमशतकस्य सङ्कलनस्वीकारे तथ्याद्विपरीतं न भविष्यति। डॉ० जालीमहाशयेन कलिकातातोऽस्य प्रकाशनमांग्लानुवादेन सह 'सेक्रेड-बुक-सीरीजस्य सप्तमे खण्डे कृतम्। एषां धर्मसूत्राणामतिरिक्तं हारीतस्य धर्मसूत्रं शङ्खलिखितं धर्मसूत्रमप्युपलब्धमस्ति। परञ्च तेषां सम्बन्धः कल्पसूत्रैः सह साक्षाद्रूपेण न सिद्धयति।

## शुल्वसूत्रम्

भारतवर्षे रेखागणितस्य प्राचीनेतिहासस्य ज्ञानाय शुल्वसूत्राणामध्ययनं नितान्तमावश्यकमस्ति। शुल्वसूत्रं वेदाङ्गान्तर्गतं कल्पसूत्रस्यान्यतममङ्गमस्ति। कल्पसूत्रस्य मुख्यो विषयो वैदिकं कर्मकाण्डम्। कर्मकाण्डस्य प्रधानतया द्वौ प्रकारौ स्तः—गृह्यसूत्रं, श्रौतसूत्रञ्च। द्वयोः गृह्यसूत्रस्य मुख्यो विषयो विवाहादिसंस्काराणां विस्तृतं वर्णनम्। श्रौतसूत्रेषु श्रुतिप्रतिपादितानां विविधयज्ञ-यागानां विशदं विवरणं प्रस्तुतमस्ति। शुल्वसूत्रमेषां श्रौतसूत्राणां महत्त्वपूर्णः एकोंऽशो विद्यते। शुल्वशब्दस्यार्थोऽस्ति रज्जुः, अतो रज्जुना प्रमापिताया वेद्याः रचना शुल्वसूत्रस्य प्रतिपाद्यो विषयः।

सिद्धान्तस्य दृष्टया तु प्रत्येकस्या वैदिकशाखाया स्वविशिष्टं शुल्वसूत्रं भवति। परञ्च व्यवहारतो नेयं स्थितिः। कर्मकाण्डेन सह मुख्यतः सम्बद्धत्वात् शुल्वसूत्राणि यजुर्वेदस्यैव शाखायां प्राप्यन्ते। यजुर्वेदस्यानेकशाखाभिः सह शुल्वसूत्राणामस्तित्वं प्राप्यते। शुक्लयजुर्वेदेन सम्बद्धमेकमेव शुल्वसूत्रमस्ति—कात्यायनशुल्वसूत्रम्, परञ्च कृष्णयजुर्वेदेन सह सम्बद्धानि षट् शुल्वसूत्राणि प्राप्यन्ते। तद्यथा—बौधायन-आपस्तम्ब-मानव-मैत्रायणीय-वाराह-वाधूलसंज्ञकानि च। एतदतिरिक्तम्—आपस्तम्बशुल्वटीकायां करविन्दस्वामिना मशकशुल्वस्य हिरण्यकेशीशुल्वस्य चोल्लेखः कृतः। एते शुल्वसूत्रे साम्प्रतं नोपलब्धे स्तः। आपस्तम्बशुल्वे ( ६।१० ) हिरण्यकेशीशुल्वादेकमुद्धरणमप्युपलब्धं भवति।

एषु सप्तोपलब्धसूत्रेषु बौधायनशुल्वसूत्रमेव सर्वतोऽधिकं प्राचीनं महत्तमञ्च शुल्वसूत्रमस्ति। अस्मिन् त्रयः परिच्छेदाः सन्ति। तत्र प्रथमे परिच्छेदे ११६ सूत्राणि सन्ति, येषु मङ्गलाचरणानन्तरं शुल्वे प्रयुक्तानां विविधमानानां, याज्ञिकवेदीनां निर्माणाय मुख्यानां रेखागणितीयतथ्यानां, विभिन्नवेदीनां क्रमिकस्थानस्याकारप्रकारस्य च वर्णनं विद्यते। द्वितीये परिच्छेदे ८६ सूत्राणि सन्ति, येषु वेदिनिर्माणस्य सामान्यनियमानां बहुशो वर्णनानन्तरं गार्हपत्यचितेः छन्दश्चितेश्च रचनाया विवरणं प्रस्तुतमस्ति। तृतीयपरिच्छेदे ३२३ सूत्राणि सन्ति, येषु काम्येष्टीनां १७ प्रभेदेभ्यो वेदिनिर्माणस्य विशदं विवरणमस्ति।

आपस्तम्ब-शुल्वसूत्रं षट् ( ६ ) पटलेषु विभक्तमस्ति। येषामाभ्यन्तरेऽन्यावान्तरवर्गाः सन्ति। इत्थमस्मिन् २१ अध्यायाः २२३ सूत्राणि च सन्ति। तत्र प्रथमे पटले वेदिरचनाया आधारभूतानां रेखागणितीयसिद्धान्तानां निर्वचनमस्ति। द्वितीये पटले वेद्याः क्रमिकस्थानानां तद्रूपाणाञ्च वर्णनं करोति। अत्र तन्निष्पादनप्रक्रियाया अपि विवरणमस्ति। अन्तिमपञ्चदशाध्यायेषु काम्येष्टचै विभिन्नवेदीनामाकार-

प्रकारस्य विशदं विवेचनमस्ति। अत्र बौधायन-आपस्तम्बाभ्यां प्रायः समस्त-काम्येष्टीनां समानरूपेण विवेचनं कृतम्। उभयोरान्तर्यमिदमेवास्ति यत्—आपस्तम्ब-स्यापेक्षया बौधायनेऽधिकं विस्तारं विभेदांश्च सत्ता प्राप्नोति। आपस्तम्बधर्मसूत्रम-पेक्षाकृतं सरलं सङ्क्षिप्तञ्चास्ति।

## बौधायनशुल्वस्य टीकाकाराः

बौधायनस्य द्वयोष्टीकाकारयोः स्थितिर्ज्ञायते। याभ्यामेकस्तथा न प्राचीनः प्रतीयते, परञ्च द्वितीयष्टीकाकारः पर्याप्तरूपेण प्राचीन इति विदुषां मतम्।

( क ) **द्वारकानाथयज्वा**—इमे आर्यभट्टस्य पश्चाद्वर्तिनो निश्चितरूपेण प्रतीयन्ते। यत एतैः स्वटीकायामार्यभटीयस्यैकस्य सिद्धान्तस्य निर्देशः कृतः। शुल्वसूत्रानुसारं व्यासस्य परिधेश्च सम्बन्धः Jc भवति, परञ्च द्वारिकानाथयज्वामहाशयेनास्मिन् नियमे संशोधनमुपस्थापितं येन Jc इत्यस्य मूल्यमाधुनिकगणनानुसारमेव ३,१४१६ पर्यन्तं सिद्ध्यति। अनेनैव प्रकारेणान्यगणनायै अपि यज्वामहाशयेन स्वविमलप्रतिभायाः परिचयः प्रदत्तः। अस्या व्याख्याया नाम विद्यते—शुल्वदीपिका। श्रीमता यज्वा-महाशयेन स्वटीकायाः पुष्पिकायां 'महात्मज' लिखितमस्ति। अस्य शुल्वसूत्रस्य यज्वनष्टीकया—आंग्लानुवादेन—विस्तृताभिष्टिप्पणीभिश्च सह डॉ० थीबोमहाशये-नैकं सुन्दरं संस्करणं प्रकाशितम्। अस्य पुनर्मुद्रणं नवदेहलीतः १९८० ईसवीये वर्षे प्रकाशितमभूत्।

( ख ) **वेङ्कटेश्वरदीक्षितः**—अस्य टीकाया नाम 'शुल्वमीमांसा' विद्यते। इमे यज्वनोऽपेक्षया नवीना ग्रन्थकाराः प्रतीयन्ते।

**आपस्तम्बशुल्वस्य टीकाकाराः**—शुल्वसूत्रमिदं टीकादृष्टयाऽतीव लोकप्रिय-मासीत् अस्ति च।

( क ) **कपर्दस्वामी**—एषु टीकाकारेषु इमे सर्वतोऽधिकाः प्राचीनाः प्रतीयन्ते। एतैरेषां ग्रन्थानां टीकाः कृताः। ते ग्रन्थाः सन्ति—आपस्तम्बश्रौतसूत्रम्, आपस्तम्ब-सूत्रपरिभाषा, दर्शपौर्णमाससूत्रं, भारद्वाजगृह्यसूत्रमित्यादि। शूलपाणिना, हेमाद्रिणा, नीलकण्ठेन चैषां मतस्योद्धरणं स्वग्रन्थेषु कृतम्। अनेन निर्देशेनैतेषां समयनिरूपणं सुनिश्चितं भविष्यति। शूलपाणेः समयः ११५० ईसवीयस्य निकटे वर्तते। वेदार्थ-दीपिकाया रचयितुः षड्गुरुशिष्यस्य ( ११४१-११९३ ई० ) इमे गुरव आसन्। हेमाद्रेश्चापि कालः त्रयोदशशतकमस्ति। अनेन प्रकारेण शूलपाणिना हेमाद्रिणा चोद्धृतत्वात् कपर्दिस्वामिनः समयो द्वादशशतकात् पूर्वमेव भवितव्यः। इमे दक्षिण-भारतीयाः प्रतीयन्ते। स्वटीकायामेतैः कतिपयानां नियमानां रचनाप्रकाराणाञ्च विवरणं प्रदत्तम्।

( ख ) **करविन्दस्वामी**—एभिर्महाशयैः आपस्तम्बस्य सम्पूर्णे श्रौतसूत्रे स्वव्याख्या लिखिता। एषां कालनिर्धारणमधुनापर्यन्तं समुचितरूपेण नाभूत्। एतैर्नामनिर्देशं विनैवार्यभटप्रथमस्य ग्रन्थस्यार्यभटीयस्य कतिपयान् निर्देशान् स्वग्रन्थेषु उल्लेखाः कृताः। यैः एते निश्चितरूपेण पञ्चमशतकादर्वाचीनाः प्रतीयन्ते। एतेषां टीकाया

नाम शुल्वप्रदीपिका विद्यते। इयञ्च मूलग्रन्थग्रन्थिस्फोटनाय मर्मभेदिनी व्याख्या विद्यते।

( ग ) **सुन्दरराजः**—अस्य टीकाया नाम 'शुल्वप्रदीप' इत्यस्ति। या ग्रन्थ-कारस्य नाम्नि 'सुन्दरराजीय' इति नाम्न्या प्रख्याता विद्यते। अस्यापि कालस्य यथार्थतो ज्ञानं न भवति। अस्य ग्रन्थस्य प्राचीनहस्तलेखस्य कालः वै० सं० १६३८ वर्तते। यः तञ्जोरस्य राजकीयपुस्तकालयेषु सुरक्षितोऽस्ति। अतोऽस्य कालः षोडश-शतकात् प्राचीनः स्यात्। एभिः बौधायनशुल्वस्य टीकाकारस्य द्वारकानाथयज्वा-महाशयस्य कतिपयवाक्यानि स्वटीकायां समुद्धृतानि।

( घ ) **गोपालः**—अस्य व्याख्याया नाम विद्यते—आपस्तम्बीयशुल्वभाष्यम्। अस्य पितुर्नाम 'गातर्य नृसिंह सोमसुत्' विद्यते। इत्यनेन प्रतीयते यत्—इमे कर्मकाण्ड-दीक्षिते वैदिकपरिवारे समुत्पन्नाः कर्मकाण्डीयपरम्परातः पूर्णपरिचिताश्चासन्।

कात्यायनशुल्वसूत्रस्य प्रसिद्धं नाम विद्यते—कात्यायनशुल्वपरिशिष्टमथवा कातीय-शुल्वपरिशिष्टम्। इदं भागद्वये विभक्तमस्ति। तत्र प्रथमो भागः सूत्रात्मकः, सप्त कण्डिकासु च विभक्तेऽस्मिन् नवति ( ९० ) सूत्राणि सन्ति। अस्मिन् वेदीनां रचनायै अपेक्षित-रेखागणितीयतथ्यानां, वेदीनां स्थानक्रमस्य तत्परिमाणस्य च सम्पूर्णं वर्णनं विद्यते। अत्र काम्येष्टीनां वेदीनाञ्च वर्णनं नास्ति। यतः कात्यायनश्रौतसूत्रस्य सप्तदशेऽध्यायेऽस्य वर्णनं पूर्वमेव कृतम्। द्वितीयः **खण्डः** श्लोकात्मको विद्यते, ४० किंवा ४८ श्लोकाः प्राप्यन्ते। अत्र परिमापिकाया रज्जोः, निपुण-वेदिनिर्मातॄणां गुणानां तत्कर्त्तव्यानाञ्च, सहैव पूर्वभागे वर्णितानां रचनापद्धतीनामपि विवरणमस्ति। अस्यैव द्वितीयखण्डस्य कातीयपरिशिष्टमस्ति। यतो ह्यत्र पूर्वखण्डविषयाणां सङ्क्षेपेण पुनर्वर्णनं विद्यते। पूर्वोक्तयोर्द्वयोः शुल्वसूत्रयोः अपेक्षयाऽस्मिन् कतिपयानि वैशिष्ट्यानि प्राप्यन्ते। कात्यायनेन वेदिनिर्माणस्यावश्यकानां समस्तानां रेखागणितीयविषयाणां विवरणं विशेषक्रमबद्धरूपेणात्र प्रस्तुतमस्ति। अस्योपरि टीकाद्वयमुपलभ्यते।

( क ) **रामः रामवाजपेयो वा**—इमे महानुभावा नैमिषस्य ( नैमिषारण्य इति ख्यातस्य ) निवासिन आसन्। एतैरनेके ग्रन्था विरचिताः, येषु मुख्याः सन्ति—क्रमदीपिका, कुण्डाकृतिः, शुल्ववार्त्तिकः, साङ्ख्यायनगृह्यपद्धतिः, समरसारः, समरसार-सङ्ग्रहः, शारदातिलकतन्त्रस्य व्याख्या, कातीयशुल्वसूत्रस्य टीका च। कुण्डाकृति इत्यस्य रचनाकालः १५०६ वैक्रमाब्दे विद्यते। अतो रामस्याविर्भावकालः पञ्चदश-शतकस्य मध्यभागः सिद्ध्यति। राममहाशयाः स्वविषयस्य विज्ञाः पण्डिताः प्रतीयन्ते। अनेन शुल्वसूत्रेषु उल्लिखितस्य $\sqrt{२}$ इत्यस्य यन्मूल्यं प्रदत्तमस्ति तत् शुल्व-सूत्रे प्रदत्तस्य मूल्यस्यापेक्षया किमप्यधिकं सूक्ष्मं यथोचितश्चास्ति। शुल्वानुसारं $\sqrt{२}$ इत्यस्य मूल्यमस्ति—१. ४१४२१५६८६३ तथा रामस्यानुसारं $\sqrt{२}$ इत्यस्य मूल्यमस्ति १. ४१४२१३५०२। साम्प्रतिकगणनानुसारं $\sqrt{२}$ इत्यस्य मूल्यमस्ति १. ४१४२१३५६। एषां त्रयाणां मूल्यानां तुलनया स्पष्टं भवति यत्—शुल्व-सूत्राणां निर्णयः ५ दशमलव-अङ्कपर्यन्तमेव समुचितमस्ति। परञ्च रामस्य गणना

७ दशमलव-अङ्कपर्यन्ता गणना समुचिता विद्यते । गणनेयं टीकाकारस्य सूक्ष्मगणनापद्धतेः प्रतीकस्वरूपा विद्यते ।

( ख ) **महीधरः**—महीधरमहाशयाः काशीनिवासिनः प्रकाण्डवैदिका आसन् । वेदस्य तन्त्रस्य च विषये एषामनेकानि प्रौढग्रन्थरत्नान्यद्यापि प्राप्यन्ते । एभिः स्व-'मन्त्रमहोदधेः' समापनं १५८९ ईसवीये विष्णुभक्तिकल्पलताप्रकाशस्य च रचना १५९७ ईसवीये वत्सरे कृतेति ।

श्रीमता महीधरेण स्वकात्यायनशुल्वसूत्रभाष्यस्य पुष्पिकायामनेकज्ञातव्यतथ्यानि प्रदत्तानि । स्वगुरोः रत्नेश्वरमिश्रस्य ( प्रख्यातविदुषः केशवमिश्रस्यात्मजस्य ) आज्ञया एभिः भाष्यवृत्त्यनुसारिणी विवृतिर्लिखिता । भाष्यन्तु कर्काचार्यस्य प्रतीयते । वृत्तिः रामेण लिखिता । तेन स्पष्टं भवति यत्—महीधरेण रामवाजपेयिनो वृत्त्यनन्तरं स्वविवृतिर्लिखिता । विवृतेः रचनाकालः १६४६ वैक्रमाब्दे विद्यते ।

( ग ) **महामहोपाध्याय-पण्डित-विद्याधरगौडेनापि** कात्यायनश्रौतसूत्रे कातीयशुल्वसूत्रे च स्वसरलायाः सुबोधाया व्याख्याया रचनां विधायैतद्ग्रन्थविषयान् साधारणजनेभ्योऽपि बोधगम्यं कृतम् । यथार्थनाम्नो विद्याधरगौडस्य जनिः १९४३ वैक्रमाब्देऽभूत् । एषां पूज्याः पितरो महामहोपाध्यायाः पण्डितप्रभुदत्तगौडमहोदया वेदस्य कर्मकाण्डस्य च अद्वितीया विद्वांस आसन् । समस्ते उत्तरभारते सम्पन्नेषु यज्ञेषु यागेषु च स्यान्नाम कोऽपि यज्ञभागो भवेत्, यस्य यं वा श्रीगौडमहानुभावस्याचार्यत्वस्य पूर्णः सहयोगः प्राप्तो नासीत् । पिता-पुत्रौ द्वावपि महामहोपाध्यायौ आस्ताम् । अपि च काशीहिन्दूविश्वविद्यालये वेदविभागाध्यक्षा आसन् । विद्याधरगौडरचितानां कात्यायनश्रौतसूत्राणां 'सरला' नाम्नी व्याख्या कर्काचार्यभाष्यस्यानुगमनं करोति । परञ्च भाष्यस्य काठिन्यस्थानेऽत्र सारल्यस्य धारा प्रवाहिता भवति । सरलावृत्तेः उपोद्घाते श्रौतयागविषयकानां समस्तानां प्रमेयाणामतिसरलशैल्या विस्तरेण प्रतिपादनमस्ति । यस्मिंश्च यथा च ग्रन्थकारस्य वैदिकशास्त्राणामालोडनं मीमांसाशास्त्रस्य च गम्भीरमध्ययनं स्पष्टतः परिस्फुरितं भवति । कातीयशुल्वसूत्रस्य टीकाया अप्येतादृशं वैशिष्टयं विद्यते । विषयस्य प्रतिपादनं सुबोधरीत्या उदाहरणैः सह कृतम् । कल्पसूत्रस्य द्वयोः प्रकारयोः निर्मिता व्याख्या सर्वथा अभिनन्दनीया विद्यते । एषां निधनं काश्यामेव १९९८ वैक्रमाब्दे ५५ वर्षाणामायुषि अभवत् ।

शुल्वसूत्रेषु प्राचीना महत्त्वपूर्णाश्चेमे एव त्रयो ग्रन्थाः सन्ति—बौधायनस्य, आपस्तम्बस्य, कात्यायनस्य च शुल्वसूत्राणि, येषामनुशीलनेन जैनधर्मस्योदयात्पूर्वं भारतीयरेखागणितस्य विशिष्टं रूपं समालोचकानामग्रतः समायाति । एषु त्रिषु विविधनवीनतथ्यानां सङ्कलनमस्ति । यानि परस्परपूरकानि सन्ति । एतदतिरिक्तं शुल्वसूत्राणि तथा महत्त्वपूर्णानि न सन्ति महत्त्वदृष्टया च सामान्याः केवलं ग्रन्थाः सन्ति । एषां ग्रन्थानां सामान्यपरिचयाः—

( क ) **मानवशुल्वसूत्रम्**—गद्यपद्याभ्यां मिश्रितमिदं स्वल्पकायो ग्रन्थोऽस्ति । **अस्मिन् अनेकवेदीनां वर्णनं मिलति, यच्च पूर्वोक्तग्रन्थेषु न प्राप्यते । अत्र च 'सुपर्ण-**

चिति'नाम्न्या प्रसिद्धायास्तस्या वेद्याः वर्णनं विद्यते या 'श्येनचिति'नाम्न्या अन्यत्र प्रसिद्धाऽस्ति ।

( ख ) **मैत्रायणीयशुल्वसूत्रम्**—मानवशुल्वस्येदमेकमपरं संस्करणमस्ति । द्वयोः विषय एव न केवलमेकसमानः, अपि तु द्वयोरेकसमाना श्लोका अपि प्राप्यन्ते । परञ्च द्वयोः कतिपयमन्तरमप्यस्ति, विशेषतः क्रमव्यवस्थायाम् ।

( ग ) **वाराहशुल्वसूत्रम्**—इदं शुल्वसूत्रं मानव-मैत्रायणीयशुल्वयोः समानमेवास्ति । कृष्णयजुषा सम्बद्धत्वादेषु त्रिषु समानस्थितिः काप्याश्चर्यस्य घटना नास्ति ।

**टीकाकारः**—काशीनिवासिना नारदस्य पुत्रेण श्रीमता शिवदासेन मानवशुल्वेषु एका टीका विलिखिता । शिवदासस्यानुजेन शङ्करभट्टेन मैत्रायणीयशुल्वे टीका रचिता । उभावपि भ्रातरौ स्वटीकासु रामवाजपेयिनमतस्योल्लेखः कृतो यत् निश्चयेन शुल्वस्य टीकाकारो राम एवास्ति । शिवदासेन वेदभाष्यकारस्य सायणस्योल्लेखः कृतो येनास्य कालः चतुर्दशशतकात्पूर्वं नैव भविष्यति । शुल्वसूत्रसम्बद्धस्य प्राचीनसाहित्यस्येयमेव रूपरेखा विद्यते ।

---

# व्याकरणम्

## ( मुखं व्याकरणं स्मृतम् )

विदन्ति विद्वांसो यद्वेदाश्चत्वारो भवन्ति। यथा कस्यापि शरीरधारिणः पुरुषस्य विभिन्नान्यङ्गानि भवन्ति तद्वत् वेदपुरुषस्याप्यङ्गानि सन्ति। अङ्गानि संयोज्यैव पुरुषाकृतिर्निर्मीयते। तद्वत् वेदस्य वेदानां वा षडङ्गानि मुख्यानि भवन्ति। तेषु षडङ्गेषु व्याकरणं तृतीयमङ्गमस्ति। तच्च वेदपुरुषस्य प्रधानतममङ्गं मुखमस्ति—'मुखं व्याकरणं स्मृतमि'ति निर्देशात्। मुखरूपत्वादस्य शास्त्रस्य मुख्यत्वं स्वयमेव सिद्धं भवति।

**व्याकरणस्य प्रयोजनानि**—साम्प्रतं विचारणीयोऽयं वर्तते यदस्य शास्त्रस्य किं प्रयोजनम्? यतो हि—कस्यापि शास्त्रस्याध्ययनायैतदावश्यकं भवति तस्य शास्त्रस्य किं प्रयोजनम्। प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते। अतः प्रयोजनेन विना कस्यापि कुत्रापि प्रवृत्तिर्न भविष्यति, इति निष्कर्षः समापतति। अध्ययनस्य यत्किञ्चिद् दृष्टमदृष्टं वा फलं भवत्येव। निष्प्रयोजनन्तु किमपि न भवति। अतो निर्विवादमेतत् यच्छास्त्राध्ययनस्य पूर्वं तच्छास्त्रस्य प्रयोजनज्ञानमावश्यकं भवति। इति लक्ष्यमादायैव मीमांसकेन कुमारिलभट्टेन स्वीये श्लोकवार्तिके उच्चैर्घोषितं यत्—

'सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित्।
यावत् प्रयोजनं नोक्तं तावत् तत्केन गृह्यते'॥

इत्येव नहि। अपरञ्चोक्तं तत्रैव, तद्यथा—

'सिद्धार्थज्ञातसम्बन्धे श्रोतुं श्रोता प्रवर्त्तते।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः'॥

आभ्यां प्रमाणाभ्यां सिद्ध्यति यत् शास्त्राध्ययनं सप्रयोजनं भवति। अत्रैतद्ध्यातव्यं यत्—महर्षिणा पाणिनिना व्याकरणशास्त्रस्य सर्वतोमुखी रचना तु कृता, किन्तु अध्ययनस्य प्रयोजनं नोपदिष्टम्। एतदेव कारणमस्ति यत् मीमांसाशास्त्रस्य सम्प्रदाये 'प्रयोगोऽयन्तु शास्त्रत्वादि'त्यस्य वार्तिके लिखितमस्ति यत्—

'न तावत् शास्त्रकारेण किञ्चिदुक्तं प्रयोजनम्।
कथं चैतानपि ग्रन्थे स्यात् प्रयोजनविस्मृतिः'॥ ( तन्त्रवार्तिके )

अस्योत्तरे केवलमियदेव कथनं समुचितं भविष्यति यत्—पाणिनिना प्रयोजनं नोपदिष्टम्, तेन न कापि हानिर्भवति। येन प्रकारेण धार्मिकानुष्ठानतत्परं जनं सन्ध्यावन्दनादीनां प्रयोजनख्यापनस्य कापि आवश्यकता न भवति, तेनैव प्रकारेणात्मोत्कर्षेच्छुकं जनं व्याकरणपाठशिक्षणस्याथवा तत्प्रयोजनख्यापनस्य काप्यावश्यकता न भवति। अस्मिन् विषये श्रुतिरप्युच्चैर्घोषयति—'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो

वेदोऽध्येयो ज्ञेयश्च'। अतो यदि स्वोत्तराधिकारिभ्यः पाणिनिना किमपि प्रयोजनं न निर्दिष्टं तदाऽसङ्गतं किं कृतमिति। दशमे शतके काश्मीरनिवासिना जयन्तभट्टेन न्यायमञ्जर्याः प्रमाणप्रकरणे कथितं यत्—'यद्यपि सूत्रकृता स्वयं प्रयोजनं किमिति न वक्तव्यमि'ति। यस्मिन् स्थले यस्य शब्दस्यार्थोऽन्वितो न भवेत् तस्मिन् स्थले तस्य पदस्य त्यागं विधायान्वययोग्या पदयोजनाविधानस्य नाम—'ऊहः' विद्यते। यथा निर्वपनसंस्कारे—'अग्नये त्वा जुष्टं निर्वपामि' इति पाठो भविष्यति परञ्च प्रोक्षणसंस्कारे 'निर्वपामि' इति पदस्य परिवर्तनं विधाय 'प्रोक्षयामि' इति पाठो भविष्यति।

(ग) **आगमः**—इत्यस्मिन् विषये महाभाष्ये लिखितमस्ति—'आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति प्रधानं च षट्स्वङ्गेषु व्याकरणं प्रधाने च कृतो यत्नः फलवान् भवति' इत्यनेन व्याकरणशास्त्रस्य सर्वशास्त्रेषु प्रधानत्वं सिद्धयति। अस्मिन् विषये कैयटवैयाकरणाः कथयन्ति—"आगमः प्रयोजनः प्रवर्तको नित्यकर्मता व्याकरणाध्ययनस्य दर्शयति। प्रयोजनशब्देन च प्रयोजकश्चोच्यते"। इत्येव नहि भट्टोजिदीक्षिता अपि आगमस्य प्रवर्तकत्वमेव ख्यापयन्ति। तेषां कथनमस्ति—'रक्षोहलाघवासन्देहाख्यानि चत्वारि फलानि, आगमस्तु प्रवर्तक इति।

(घ) **लघुता**—अस्मिन् विषये शब्दशास्त्रस्य प्रमुखव्याख्यातारो भाष्यकाराः पतञ्जलयः कथयन्ति यत्—लघ्वर्थं चाध्येयं व्याकरणं ब्राह्मणेनावश्यं शब्दा ज्ञेया इति। न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या ज्ञातुम्'। इत्यनेन सिद्धयति यत्—शब्दशास्त्रस्य ज्ञानं ब्राह्मणायावश्यकमिति। किञ्च व्याकरणातिरिक्तं लघूपायेन शब्दज्ञानं न भवितुमर्हति। अत्र महर्षेरभिप्रायोऽयमस्ति यत्—पुरा कल्पपद्धत्यनुसारं प्रतिपदपाठेन शब्दज्ञानलाभापेक्षया सामान्यविशेषात्मकं नियमावलम्बनपूर्वकं शब्दज्ञानं सुलभं भवति। तथा चाह तन्त्रवार्त्तिके—

'यदि वा गौरवस्यैव लघुत्वमुपचर्यते।
विपर्ययापदेशेन शूरे कातरशब्दवत्'॥

अपरञ्च व्याकरणाध्ययने प्रयोजनस्यापेक्षा—अनिवार्यरूपेणास्ति न वेति समुचितैः उदाहरणैः भाष्यकाराः सुस्पष्टमुद्घोषयन्ति यत्—'व्याहृतं तदप्यदूषणमेव व्याकरणं हि वेदाङ्गमिति प्रसिद्धमेतदाहिमवत् आ च कुमारीभ्यः, वेदश्च यदि निष्प्रयोजनः स्वस्ति प्रजाभ्यः समाप्तानि दृष्टादृष्टफलानि सर्वकर्मणि जितं चातुर्वर्ण्यबाह्यैरन्त्यजनवासिभिः म्लेच्छैः, अथ सप्रयोजनो वेदः षडङ्गत्वादङ्गैः स एव सप्रयोजनतां भजत इति कोऽर्थः प्रयोजनान्तरचिन्तया नहि दर्शपूर्णमासप्रयोजनादन्यत् प्रयोजनमिष्यते इति मत्वा नः स्वयं सूत्रकृत् प्रयोजनं नाख्यात्' इति। अपरञ्च—पश्चाद्वर्त्तिकाले व्यवहारपक्षमादाय कैयटमहानुभावाः कथयन्ति यत्—पाणिनिकाले वेदपाठेन सह व्याकरणाध्ययनस्य प्रचलनमासीत्। अतोऽध्येतॄणां मध्ये आबाल्यादेव प्रयोजनज्ञानस्यौत्सुक्यं नासीदतः पाणिनिनाऽस्य किमपि प्रयोजनं नोपदिष्टम्। अस्मिन् विषये—कात्यायन-

कुमारिल-जयन्तभट्टादयो व्याख्याकारा बहुशो विमृशन्ति। अलमत्र कथनोपकथनेन। आचार्याणां प्रयोजनविषयिका धारणा समादरयोग्या विद्यते।

अथापि कात्यायनेन प्रयोजनमुद्दिश्य कथितं यत्—'रक्षोहागमलघ्वसन्देहाः व्याकरणप्रयोजनम्'। एषां प्रयोजनविषयाणां क्रमेणैकैकस्य विचारः प्रस्तूयते। तद्यथा—

(क) **रक्षा**—व्याकरणस्य प्रयोजनचतुष्टयेषु रक्षा प्रथमं प्रयोजनं विद्यते। अस्मिन् विषये पतञ्जलिना कथितं यद्—'रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यक् वेदान् प्रतिपालयिष्यति इति।' अत्रायमाशयः—व्याकरणस्य नियमानुसारं वर्णलोपादीनामज्ञानात् सर्वेषां शास्त्राणामाकारस्वरूपस्य वेदस्य परिपालनं न भवितुमर्हति। एतत्तथ्यं मीमांसका न स्वीकुर्वन्ति। कुमारिलभट्टास्तु सुस्पष्टं कथयन्ति यत्—

'वेदरक्षापि नैतस्मादृतेऽध्येतृपरम्पराम्।
सम्प्रदायानुवृत्तिश्चेद् वेदस्तेनैव रक्ष्यते'॥

एतदतिरिक्तमपि 'प्रयोगोत्पत्त्यशास्त्रत्वम्' इत्यत्र सूत्रवार्त्तिके लिखन्ति—'शिष्याचार्यसम्बन्धो हि महान् वेदरक्षाहेतुः व्याकरणानधीतस्यापि वेदक्रमस्याध्ययनेनैव रक्षाभानत्वात्। तस्माद् वेदरक्षार्थं तावन्नाध्येयं व्याकरणम्'। अन्यच्च न्यायमञ्जर्याः प्रमाणप्रकरणे लिखितमस्ति यत्—'रक्षा तावत्—अध्येतृपरम्परात एव सिद्धा मनागपि स्वरतो वर्णतो वा प्रमाद्यन्तं किञ्चिदधीयानमन्येऽध्येतारो मा विनीनशः श्रुतिं गुरव उच्चारयेदित्याचक्षाणाः शिष्यान् इति रक्षितो भवति वेदः'। अत्रायमाशयः—वेदाध्येत्रा पारस्परिकरूपेण रक्षितो भवति वेदः, यथा हि—गुरुकुले यदा आचार्यः समुपस्थितो न तिष्ठति तदा शिष्याः परस्परं भ्रमापनोदनं कुर्वन्ति। अतो वेदश्चिरकालपर्यन्तमक्षुण्णस्तिष्ठति।

न केवलं शिष्याचार्याभ्यामेव वेदरक्षा न भवति, प्रत्युत व्याकरणस्य स्पष्टतः प्रयोजनमप्यस्ति। 'ईश्वरो विचरितोः' इत्येषो वैदिकः प्रयोगः। इत्यत्र 'विचरितो' एतत्पदं 'ईश्वरे तो सुनक्सुनौ' इति सूत्रस्यानुसारं निष्पन्नं भवति। अनेन प्रकारेण शब्दस्य साधुत्वं लोके न सिद्ध्यति। एतदेव कारणमस्ति यत् कात्यायन-पतञ्जल्योर्मतमस्ति यत्—व्याकरणज्ञानस्याभावे मन्त्रेषु विकारः उत्पत्स्यते। निष्कर्षश्चात्र व्याकरणं पुरुषार्थस्य साधनोपायः, यतो हि व्याकरणेन वेदार्थज्ञानं, कर्मानुष्ठानजनितं सुखम्, उपनिषज्जनितं सुखञ्च वस्तुतो व्याकरणपाठस्यैव फलमस्ति।

( ख ) **ऊहः**—ऊहस्यार्थः नूतनपदानां कल्पनया विद्यते। अस्मिन् विषये महर्षयः पतञ्जलयो महाभाष्ये प्रतिपादयन्ति यत्—ऊहः खल्वपि न सर्वलिङ्गैः न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः, ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्या। तावन्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुं तस्मादध्येयं व्याकरणम्'।

अस्मिन् विषये मीमांसकानां भिन्नः पन्था विद्यते, ते कथयन्ति यदूहस्तु मीमांसाशास्त्रविषयः न तु व्याकरणस्य। अस्मिन् विषये कुमारिलभट्टाः तन्त्रवार्तिके वदन्ति—

'ऊहार्थमपि शब्दानां न व्याकरणमर्थवत् ।
ऊहस्याप्यन्यतः सिद्धे ऊह्यानूह्यविभागवत्' ।।

( ग ) **आगमः**—स्वयं श्रुतिरेव व्याकरणाध्ययनाय प्रमाणभूता विद्यते । श्रुतिरुच्चैर्घोषयति यत् ब्राह्मणस्येदं कर्तव्यमस्ति यत् स निष्कारणं धर्मस्याङ्गसहितस्य वेदस्याध्ययनं ज्ञानञ्च प्राप्नुयात् । यतो हि षडङ्गेषु व्याकरणमेव मुख्यमस्ति । मुख्यविषये कृतो यत्नो विशेषफलवान् भवति । अतः श्रुतिप्रामाण्यं स्वीकृत्य व्याकरणस्याध्ययनं द्विजमात्रस्य कर्त्तव्यमस्ति ।

( घ ) **लघुः**—अस्यायं निष्कर्षो वरीवर्ति यत्—वीरे यथा कातरशब्दस्याधानं क्रियेत तेनैव प्रकारेण गुरुत्वे लघुताया उपचाराय विपरीतलक्षणावत् गुरुं लघुः कथितः । लोकप्रसिद्धान् शब्दानादायालौकिकानां संज्ञापरिमाणनिबद्धानामनेकप्रक्रियाणां नियमधातु-प्रत्यय-सूत्रादीनां प्रयोगपूर्वकं भाष्यं निर्निमित्तकाक्षेपेण समाधानादिनाऽत्यन्तं कष्टं भवति । तत् पूर्वपरिचिते शब्दे प्रत्यावर्तनं विधाय व्याकरणे तस्यानुवादमात्रं भवति । तदा तं लघु कथं विजानीयात् । अस्योत्तरे सिद्धान्तपक्षधारकाः कथयिष्यन्ति—शब्दस्य साधुत्वातिरिक्तमपि अध्यापनं सम्भवं नास्ति, एकैकेन शब्देनोपदेशस्त्वथापि दुःसाध्यो विद्यते । अनेन प्रकारेण सामान्य-विशेषयोरनुगमकलक्षणातिरिक्तस्य पठनपाठनयोः सौकर्यं नास्ति । श्रुतिरपि कथयति—

'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम' । अत एव पतञ्जलिमहर्षयः कथयन्ति यत्—शास्त्रस्य लघुतासम्पादनमपि व्याकरणस्य प्रयोजनमस्ति ।

( ङ ) **असन्देहः**—व्याकरणस्य प्रयोजनविषये पञ्चमं कारणमस्ति 'असन्देह' इति, अतः 'असन्देहार्थं चाध्येयं व्याकरणम् । याज्ञिकाः पठन्ति—स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति । तस्यां सन्देहा—स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्यां सेयं स्थूलपृषतीति तां नावैयाकरणः स्वरतोऽध्यवस्यति यदि पूर्वपदं प्रकृतिस्वरत्वं ततो बहुव्रीहिः । अथ समासान्तो वृत्तित्वं तत्तत्पुरुष इति । ( पृषती—श्वेतबिन्दुमती मृगी )' । निष्कर्षश्चात्रावैयाकरणः कदापि मन्त्राणां स्वरविचारे समर्थो न भविष्यति । तस्मात् व्याकरणं सप्रयोजनम् । अत्र मीमांसका आक्षिपन्ति यत्—व्याकरणं पदवाक्यादीनामर्थनिर्णयेऽपि सामर्थ्यं न दधाति किं पुनः सन्देहनिवारणे । इत्थं व्याकरणप्रयोजनविषये मुहुर्मुहुः अपलापेऽपि वैयाकरणाः कथयन्ति—

'यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् ।
स्वजनः श्वजनो माभूत् सकलं शकलं सकृच्छकृत्' ।।

महर्षिणा पतञ्जलिना तु उपर्युक्तानां प्रयोजनानामतिरिक्तं प्रयोजनं म्लेच्छतानिवारणं प्रधानं कथितम् । ते कथयन्ति—

'तेऽसुराः हेलयो हेलय इति कुर्वन्तः पराबभूवुः, तस्मात् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वो एष यदपशब्दः । म्लेच्छो मा भूमेत्यध्येयं व्याकरणम्' । किम्बहुना शतपथब्राह्मणेऽप्याम्नातं यत्—

'तेऽसुरा आप्तुकामा हेलयो हेलय इति वदन्तः ।
पराबभूवुः तस्मात् ब्राह्मणो न म्लेच्छवत्' ॥

यज्ञशालायां याज्ञिका अपशब्दानां प्रयोगं न कुर्युः, येन च वेदस्य सुरक्षा भवेत् तस्माद् व्याकरणमध्येतव्यम् । व्याकरणञ्च सप्रयोजनम् । यतो हि—'एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति । अलमतिविस्तरेणास्मिन् विषये ।

## अथातो व्याकरणमीमांसा

व्याकरणमपि प्रकृति-प्रत्यययोः स्वरूपमुपदेशञ्च दृष्ट्वा पदस्वरूपस्य तदर्थस्य च निर्णयाय प्रयुक्तं भवति । अपि च व्याकरणस्य व्युत्पत्तिलभ्योऽर्थोऽस्ति पदमीमांसाशास्त्रम् । तथा च—व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणम् । अन्यच्च—व्याकरणं वेदपुरुषस्य मुखं स्वीक्रियते—मुखं व्याकरणं स्मृतम् । मुखभावत्वादेव वेदाङ्गेषु व्याकरणस्य प्रामुख्यं विद्यते । येन प्रकारेण मुखं विना भोजनादेरकरणात् शरीरस्य पुष्टिर्न भवत्यसम्भवोऽस्ति, तेनैव प्रकारेण व्याकरणेन विना वेदरूपिणः पुरुषस्य शरीरस्य रक्षा तथा स्थितिः कठिना दुर्वहा चास्ति । अत एवास्माकं प्राचीनैः ऋषिभिर्महर्षिभिश्च व्याकरणस्य महनीयतायाः प्रतिपादनं महत्सु गम्भीरेषु शब्देषु कृतम् ।

**व्याकरणस्य प्राचीनत्वम्**—साम्प्रतिके युगे वेदस्य वेदानां वा प्राचीनताविषये प्रमाणस्य आवश्यकता नास्ति । भवन्तु नाम वैदेशिका विद्वांसो वेदस्य कालनिर्धारणं तदपि पञ्चसहस्रादप्यधिकं निरूपणं कुर्वन्ति स्म । तत्तु न समीचीनम् । विपरीतमेतत्—भारतीया विद्वांसस्तु तस्यानादित्वमपौरुषेयत्वञ्च प्रतिपादयन्ति । सर्वप्रथमं व्याकरणस्य चर्चा ऋग्वेदे प्राप्यते । ऋक्संहितायामस्य व्याकरणशास्त्रस्य प्रशंसायामनेके मन्त्रा भिन्न-भिन्नस्थानेषूपलब्धा भवन्ति । तत्रैवैकस्मिन् सुप्रसिद्धे मन्त्रे शब्दशास्त्रस्य ( व्याकरणस्य ) वृषभरूपेणाङ्कनं रूपकमिवाङ्कनं विद्यते । यस्मिन् व्याकरणमेव कामानां पूरणार्थं वृषभनाम्नोल्लिखितमस्ति । अस्य चत्वारि शृङ्गाः सन्ति—नाम-आख्यात-उपसर्ग-निपाताश्च । पादाश्च त्रयः सन्ति—वर्तमान-भूत-भविष्यनामकाः त्रयः कालाः । अस्य द्वे शीर्षे—सुबन्त-तिङन्तरूपे । अस्य सप्त हस्ताः—प्रथमा-द्वितीयादिरूपाः सप्त विभक्तयः सन्ति । एवं प्रकारत्रयेण बद्धो वृषभरूपो देवः यो हि मनुष्येषु प्रविष्टः । काव्यमीमांसायां राजशेखरेणापि एतच्चर्चितम् । तद्यथा मूलरूपेण ऋग्वेदे ( ४।५८।३ )—

'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश' ॥

ऋग्वेदस्यैवैकस्यान्यस्मिन् मन्त्रे व्याकरणशास्त्रस्य विशेषज्ञानभिज्ञयोः तुलना महत्या गम्भीरया मार्मिकरीत्या च कृता अस्ति । व्याकरणानभिज्ञो जनः एकः एतादृशो जीवो वर्तते यो हि वाणीं पश्यन्नपि न पश्यति शृण्वन्नपि न शृणोति,

परञ्च व्याकरणविदुषे वाणी स्वस्वरूपं तेनैव प्रकारेणाभिव्यञ्जयति यथा सुवसनैः सुसज्जिता कामिनी स्वपत्युरग्रतः स्वात्मानं समर्पयति। तद्यथा मूलरूपेण ऋग्वेदे ( १०।७१।१ )—

'उत त्वः पश्यन् न ददर्श वाचम् उत त्वः शृण्वन् न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः' ॥

आचार्यवररुचिप्रोक्तानां पञ्चप्रयोजनानामतिरिक्तं महर्षिणा पतञ्जलिना त्रयोदशप्रयोजनानामपि उल्लेख कृतः। येषु कानिचित् प्रयोजनानि सङ्क्षेपेण यथा—

( १ ) **अपभाषणम्**—शब्दानामशुद्धोच्चारणस्य परिमार्जनार्थं व्याकरणमेवावास्मान् शिक्षयति। श्रूयतेऽसुराः 'हेलयः हेलयः' इत्युच्चारयन्तः पराजयं प्रापुः। वर्णानां शब्दानां चाशुद्धोच्चारणमेव म्लेच्छत्वं शुद्धोच्चारणविधानञ्च 'आर्यत्वम'स्ति। अतो वयं म्लेच्छा न स्याम एतदर्थं व्याकरणस्याध्ययनमत्यन्तावश्यकमस्ति।

( २ ) **दुष्टः शब्दः**—इति तु सुविदितमस्ति यत्—शब्दानां शुद्धेः अशुद्धेश्चापि ज्ञानं व्याकरणेनैव भवति। अशुद्धशब्दानां प्रयोगेणोत्पन्नैः अनर्थैः वयं सम्यक्तया परिचिताः स्मः। अतो दुष्टशब्दानां प्रयोगेण हानिमभिलक्ष्य तद्दूरीकरणाय व्याकरणस्याध्ययनं ज्ञानञ्चावश्यकमस्ति।

( ३ ) **अर्थज्ञानम्**—वेदस्य यथार्थज्ञानाय व्याकरणस्य ज्ञानमावश्यकं भवति। विना व्याकरणेन कापि भाषा सुस्थिरा शुद्धा च न भवति। सर्वासां भाषानां ज्ञानाय तद्भाषाया व्याकरणज्ञानमपेक्षितम्। तत्रापि संस्कृतभाषाया विशेषतो वेदस्याध्ययने तु परममपेक्षितं भवति। विना व्याकरणेनार्थस्य स्थानेऽनर्थस्य सम्भावना भवति। अर्थज्ञानं विना शास्त्रस्याध्ययनं तथैव निरर्थकं भवति, यथा—अग्नौ न प्रक्षिप्तानि शुष्कानि काष्ठानि। शुष्के काष्ठे ज्वलन-क्षमताऽवश्यमेवास्ति, परञ्च तस्याग्निना सह संयोगो भवेत्। अनेनैव प्रकारेणार्थज्ञाने सम्पन्ने सति शब्दज्ञानस्य साफल्यं भवेत्। तस्मात् व्याकरणमध्येतव्यम्।

( ४ ) **धर्मलाभः**—'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तश्च स्वर्गे लोके च कामधुग् भवति' इत्येषा भणितिः लोके सुप्रसिद्धा वर्तते। अत्रायमाशयः—यः कुशलो जनो व्यवहारसमये शुद्धानां शब्दानां प्रयोगं करोति, सः स्वर्गलोकेऽनन्तफलं प्राप्नोति, यश्च केवलमपशब्दानामेव प्रयोगं विदधाति स विविधपापानां भाजनं भवति। शुद्धः शब्दः एक एव भवति, परञ्च तस्यैवानेकेऽपभ्रंशा उपलभ्यन्ते। यथा—गौः शब्दो व्याकरणेन शुद्धः परञ्च तत्स्थाने गावी, गोणी, गोता, गोपोतलिका आदिशब्दा अपभ्रंशस्वरूपाः प्राप्यन्ते। धर्मलाभाय ( प्राप्तये ) च शुद्धपदानां प्रयोग एव न्याय्यः, अपभ्रंशस्य नैव।

( ५ ) **नामकरणम्**—गृह्यसूत्रकाराणां कथनमस्ति यत्—समुत्पन्नस्य जातकस्य दशमे दिवसे नामकरणं कर्त्तव्यम्। अस्य नामकरणस्य विशिष्टा नियमाः सन्ति, येषु एको नियमोऽयं वर्तते यत्तत्कृदन्तेन भाव्यं न तु तद्धितान्तेन। एषां सूक्ष्मतत्त्वानां परिचयं स एव प्राप्स्यति येन व्याकरणस्यानुशीलनं कृतम्।

एभिः कतिपयैः सिद्धान्तैरेव व्याकरणस्य प्रयोजनीयतायाः पर्याप्तः परिचयो मिलति।

अपरश्च—प्राचीनव्याकरणस्य विषयनिर्देशः 'गोपथब्राह्मणे' सुस्पष्टरूपेण विद्यते। धातु-प्रातिपदिक-नाम-आख्यात-लिङ्ग-वचन-विभक्ति-प्रत्यय-स्वर-उपसर्ग-निपात-मात्रा-वर्ण-अक्षर-पदसंयोग-स्थानानुपादानादयः पारिभाषिकशब्दाः तत्कालीन-व्याकरण-शास्त्रस्य मान्याः शब्दाः सन्ति।

## कस्तावत् वेदाङ्गभूतस्य व्याकरणस्य प्रतिनिधि-ग्रन्थः ?

इदानीं विचारणीयोऽयं प्रश्नो विद्यते यत् वेदस्यास्याङ्गस्य कस्तावत् प्रतिनिधिभूतो ग्रन्थः, अद्यत्वे प्रचलितेषु व्याकरणेषु पाणिनीयव्याकरणमेव प्राचीनतममस्ति। नास्त्यत्र सन्देहावसरः। प्राचीनतमत्वाच्च इदमेव पाणिनीयं व्याकरणं वेदाङ्गस्य प्रातिनिध्यं करोति। अपि च सत्स्वप्यन्येषु व्याकरणेषु पाणिनीयं व्याकरणं लोकप्रचलितं लोकप्रियञ्चास्ति। एतेन 'ऐन्द्रव्याकरणस्य' प्राचीनताविषये न काऽपि विप्रतिपत्तिः। परञ्चात्र ध्यातव्यं यत् पाणिनेः पूर्वमपि 'ऐन्द्रव्याकरणस्य' सत्ता विद्यमानाऽऽसीत्, इत्यस्मिन् विषये अनेकानि पुष्टानि प्रमाणानि समुपलब्धानि सन्ति। परञ्च कालवशं को न प्राप्तः ? तथैव ऐन्द्रव्याकरणमपि कालप्रवाहे निमज्योन्मज्य नामशेषतां प्राप।

उपलब्धप्रमाणानां साक्ष्ये एतत् कथनमनुचितं न भविष्यति यत्—वैदिके काले इन्द्रस्य प्रथमवैयाकरणस्य चर्चा श्रूयते। इति तु पश्चाद्वर्तिनो वैयाकरणा अपि स्वीकुर्वन्ति। अतोऽस्य व्याकरणस्य सत्तायां सन्देहलेशस्यापि स्थानं नास्ति।

**व्याकरणस्य क्रमिकविकासः**— महर्षिणा शाकटायनेन ऋक्तन्त्रे प्रतिपादितं यत्—व्याकरणस्य कथनं प्रवचनं वा पुरा काले ब्रह्मणा कृतम्। ब्रह्मणः सकाशात् बृहस्पतिः, बृहस्पतेः सकाशादिन्द्रः, इन्द्रस्य सकाशात् भरद्वाजः, भरद्वाजस्य सकाशादृषयः, ऋषीणां सकाशात् ब्राह्मणा व्याकरणविद्यामधिजग्मुः। इत्येष क्रमः सार्वदेशिकः। अमुं शास्त्रं विद्वांसः 'अक्षरसमाम्नाय' इत्यपि कथयन्ति। तैत्तिरीयसंहितायामस्य विषयस्य प्राचीनतमोल्लेखः प्राप्यते। तद्यथोल्लेखः—'वाग्वै पराच्यव्याकृताऽवदत्। ते देवा इन्द्रमब्रुवन्—इमां नो वाचं व्याकुर्विति। सोऽब्रवीत्—वरं वृणे, मह्यं चैवैष वायवे च सह गृह्याता इति। तस्माद् ऐन्द्रवायवः सह गृह्यते। तामिन्द्रो मव्यतः चक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुत्पद्यते'। निष्कर्षश्चात्र—पुरा काले वाक् ( वाणी ) अव्याकृता आसीत्, अस्यां वाण्यां पदप्रकृतेः कथमपि व्याख्यानं नासीत्। न तत्र व्याकरणमासीत्। अस्य व्याकरणशास्त्रस्य नियमनं भगवता इन्द्रेण कृतम्। इन्द्रनिर्देशमुररीकृत्य सुस्पष्टं विधाय महर्षिणा पतञ्जलिना महाभाष्ये पस्पशाह्निके लिखितं यत्—'बृहस्पतिश्च वक्ता ( गुरुः ), इन्द्रश्च अध्येता ( शिष्यः ), दिव्यं वर्षसहस्रमध्ययनकालः, अन्तं च न जगाम' ( तथापि विद्यायाः पारं न जगामेति )। वस्तुतः परमार्थतो व्याकरणं समुद्रवत् दृश्यतेऽतो शाब्दिकमहार्णवत्वं धारयति। अस्मिन् विषये पण्डितमण्डलीसु एका प्राचीना गाथा सुप्रसिद्धाऽस्ति—

'समुद्रवद् व्याकरणं महेश्वरे तदर्धकुम्भोद्धरणं बृहस्पतौ।
तद्भाग-भागाच्च शतं पुरन्दरे कुलाग्रबिन्दूत्पतितं हि पाणिनौ'॥

अत्रायमाशयो विद्यते––माहेश्वरं व्याकरणं समुद्रवद् विस्तृतमासीत्, बृहस्पतेः व्याकरणं अर्धघटे जलस्थापनमिवासीत्। तद्भागस्य शतांशभागः ऐन्द्रव्याकरणे विद्यमान आसीत्। पाणिनौ तु कुशाग्रभागात् पतज्जलबिन्दुरेव वर्तमानमस्ति। एतत् सापेक्षिकं वर्णनं व्याकरणस्येतिहासे क्रमभावं सूचयति।

**ऐन्द्रव्याकरणम्**—विदुषां समाजे प्राथम्येन चर्चितमिदमैन्द्रं व्याकरणमुपर्युक्तैर्निर्देशैः इन्द्रविरचितं प्रतीयते। कदापि काले व्याकरणमिदं ग्रथितमासीत्। अस्मिन् विषयेऽनेकानि प्रमाणान्युपलभ्यन्ते। तद्यथा तत्तत्स्थानेषु––

(१) नन्दकेश्वरस्मृतायाः 'काशिका'वृत्त्याः तत्त्वविमर्शिनीव्याख्यायामुपमन्युना सुस्पष्टं लिखितं यत्––"तथा चोक्तम् इन्द्रेण—'अन्तर्वर्णसमुद्भूता धातवः परिकीर्तिताः' इति"।

(२) वररुचिना 'ऐन्द्रनिघण्टोः' शुभारम्भे एवास्य निर्देशः कृतः, तद्यथा––

'पूर्वं पद्मभुवा प्रोक्तं श्रुत्वेन्द्रेण प्रकाशितम्।
तद् बुधेभ्यो वररुचिः कृतवानिन्द्रनामकम्'॥

(३) विदुषा बोपदेवेन संस्कृतस्य मान्येषु व्याकरणसम्प्रदायेषु प्रथमस्थाने इन्द्रश्चर्चितः। तद्यथा––

'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः'॥

(४) सारस्वतप्रक्रियाकर्त्रा अनुभूतिस्वरूपाचार्येणापि इन्द्र एव शब्दसागरपारङ्गमेषु उद्योगी-पुरुषेषु प्रथमश्चर्चितः। तथाहि––

'इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः।
प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम्'॥

अपरञ्च––डॉक्टरबर्नलस्य कथनमस्ति यत्—तमिलभाषाया आद्यव्याकरणे 'तोलकप्पियं' इत्यस्मिन् ग्रन्थे ऐन्द्रव्याकरणात् सविशेषा सहायता गृहीता विद्यते। अन्यच्च हरप्रसादशास्त्रिणः कथनमस्ति यत्—कातन्त्रस्य कलापस्य वा व्याकरणस्य रचना अस्यैव सम्प्रदायस्यानुसारं कृता विद्यते। अपरञ्च––वररुचिना 'भवन्ती', 'अद्यतनी', 'ह्यस्तनी' आदीनां येषां पारिभाषिकशब्दानामुल्लेखः कृतः, ते शब्दाः पाणिनेः 'लट्, लुङ्, लिट्' आदि शब्देभ्यः प्राचीनाः सन्ति; एषाञ्च प्रयोगा ऐन्द्रव्याकरणे कृता आसन्। एतद् विदुषां सम्मतं मतमस्ति।

## पाणिनीयं व्याकरणम्

साम्प्रतं व्याकरणसमन्वितस्य वेदाङ्गस्य प्रतिनिधिभूतमेकमेव व्याकरणमस्ति। तच्चास्ति पाणिनीयं व्याकरणम्। महर्षिणा पाणिनिनाऽनुमानतः सहस्रचतुष्टयैः स्वल्पाक्षरसूत्रैः संस्कृतभाषाया नितान्तं वैज्ञानिकं व्याकरणं प्रस्तुतीकृत्य विदुषः आश्चर्ये निपातिताः। वैज्ञानिकदृष्ट्या देवभाषाया यथा मनोहरं शास्त्रीयं विवेचनं पाणिनिना कृतं तादृशं विवेचनमन्यत्र नोपलब्धमस्ति। अनुसन्धानप्रिया विद्वांसः

उच्चैः स्वरेण कथयन्ति यत्—'पाणिनि'सदृशो भाषाशास्त्रचिन्तको मर्मज्ञो वैयाकरणः समस्ते विश्वेऽन्यत्र क्वापि नाभूत्। एतद् भारतवर्षस्यैव गौरवम्। पाणिनेः ग्रन्थोऽष्टाध्यायेषु विभक्तः, तस्मादमुमष्टाध्यायी कथयन्ति विद्वांसः। अस्य कालः ईसवीयपूर्वं षष्ठशतकमस्ति। पाणिनिनाऽव्याख्यातान् संस्कृते प्रयुक्तांश्च शब्दान् व्याख्या-कर्तृकोद्देश्येन कात्यायनेन ईसवीयपूर्वं चतुर्थशतके वार्तिकानां रचना कृता। तत्पश्चाच्च ईसवीयपूर्वं द्वितीयशतके पतञ्जलिना महाभाष्यस्य निर्माणं कृतम्। सूत्रेषु भाष्याण्यनेकानि सन्ति, परञ्च विषयस्य व्यापकतया विचारस्य गम्भीरतया चेदमेव भाष्यं 'महाभाष्यस्य' गौरवपूर्णमभिधानं प्राप्तमस्ति। नायं केवलं व्याकरणस्यैव ग्रन्थः, अपितु व्याकरणस्य दार्शनिकसिद्धान्तानां मीमांसा सर्वप्रथममत्रैवोपलब्धा भवति। अस्य गद्यं नितान्तं प्राञ्जलं साहित्यिकञ्चास्ति। ग्रन्थकारेण कथनोपकथनस्य शैल्यां समग्रस्य ग्रन्थस्य रचना विहिता। याऽत्यन्तं मनोहारिणी प्राञ्जला च विद्यते। व्याकरणस्य समग्रस्य इमे एव त्रयो मुनयः सन्ति। ते चेमे—पाणिनि-कात्यायन-पतञ्जलिनामकाः। एतान् त्रीन् मुनीन् नमस्कृत्यैव भट्टोजिदीक्षिताः सिद्धान्तकौमुद्या रचनां कुर्वन्ति—'मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च। वैयाकरणसिद्धान्तकौमुदीयं विरच्यते'॥ इति।

वैक्रमसंवत्सरस्य प्रारम्भादेवैषां ग्रन्थानां विदुषां समवाये विशेषरूपेण मननं समीक्षणञ्च भवति स्म। व्याकरणस्य साहित्यं विशालं प्रतिभासम्पन्नञ्चास्ति। अस्य केचन ग्रन्थास्तु असमये एव लुप्ताः सञ्जाताः। एतादृशेषु ग्रन्थेषु व्याडिमहर्षिरचितस्य 'सङ्ग्रहस्य' नाम महता समादरेण नीयते। अस्य ग्रन्थपरिमाणं लक्षमेकं श्लोकाः कथ्यन्ते। वामन-जयादित्याभ्यामष्टाध्याय्या उपरि सम्मिलितसामञ्जस्यरूपेणैका महती सारयुक्ता व्याख्या लिखिता। अस्या एव व्याख्याया अभिधा—काशिकावृत्तिः। ग्रन्थकाराविमौ कश्मीरनिवासिनौ षष्ठशतकस्य प्रारम्भे च विद्यमानावास्ताम्। अस्याः काशिकावृत्तेरुपरि विगतशतके व्याख्यानां परम्परा निबद्धा विद्यते। तास्वेकविधां व्याख्यां 'न्यास' इति कथयन्ति तद्विदः। न्यासा अनेके आसन्, परञ्च ते शनैः शनैः लुप्ताः सञ्जाताः। साम्प्रतं जिनेन्द्र-बुद्धेः न्यास एव न्यासग्रन्थानामेकमात्रं निदर्शनमस्ति। हरदत्तस्य पदमञ्जर्यपि काशिकावृत्तेरेका सर्वमान्या टीका विद्यते। इमे हरदत्तमहोदया दक्षिणभारतस्य निवासिन आसन् द्वादशशतके च विद्यमाना आसन्।

महाभाष्यानन्तरं व्याकरणदर्शनस्य सर्वप्रधानग्रन्थो 'वाक्यपदीयम'स्ति। अस्य रचयिता आचार्यो 'भर्तृहरिः' आसीत्। अस्य कालः षष्ठशतकः। वाक्यपदीये व्याकरणशास्त्रस्य दार्शनिकस्वरूपं स्फुटरूपेणाभिव्यक्तं भवति। व्याकरणं शैवागमस्यान्तर्गतमस्ति। तस्य च स्वविशिष्टा साधनप्रक्रिया विद्यते। एतस्याः पूर्णः परिचयो विदुषो वाक्यपदीयस्यानुशीलनेन भवति। भर्तृहरिमहानुभावाः शब्दाद्वैतस्य संस्थापका आसन्। तेषां दृष्टौ स्फोटमेवैकमात्रं परमं तत्त्वमस्ति। जगदिदञ्च तस्यैव विवर्तरूपमस्ति। अपि च तैः महाभाष्यस्योपरि भाष्यदीपिका नाम्नी टीका विरचिताऽऽसीत्। परञ्चाद्यत्वे त्रिपाद्येवोपलभ्यते। कश्मीरनिवासिना कैयटेन विरचितो भाष्यप्रदीप एव महाभाष्यस्य सिद्धान्तान् प्रदीपेव प्रकाशकमेकमात्रं ग्रन्थरत्नमस्ति। प्रदीपस्योपरि

नागेशभट्टेन उद्योतस्य रचनां विधाय प्रदीपसिद्धान्तानां नितान्तं सुस्पष्टविधानस्य श्लाघनीयोद्योगः कृतः ।

अपरञ्च प्रदीपोद्योतकालपर्यन्तं याष्टीका विलिखितास्ता अष्टाध्याय्याः क्रममनुसृत्य स्वीकृत्य च प्रवृत्ताः, परञ्च रामचन्द्राचार्येण पञ्चदशे शतकेऽष्टाध्याय्याः सूत्राणि प्रक्रियानुसारमेकेन नूतनेन क्रमेण निबद्धम् । अस्मिन् क्रमे पदानामेव सिद्धिः प्रधान-लक्ष्यभूताऽऽसीत् । अस्य क्रमस्य विस्तारका अभूवन् विख्याता वैयाकरणा भट्टोजिदीक्षिताः । इमे काशीनिवासिन आसन् । तेषां गुरव आसन् आचार्यशेष-श्रीकृष्णमहोदयाः । इमे स्वकालस्यातीवमर्मज्ञा वैयाकरणा आसन् । भट्टोजिदीक्षितैः तेभ्य एव शिक्षां प्राप्य व्याकरणस्येतिहासे एको नवीनो युगः समुपस्थापितः । एषां त्रयो ग्रन्थाः सन्ति—( १ ) सिद्धान्तकौमुदी, ( २ ) शब्दकौस्तुभः, ( ३ ) मनोरमा चेति । नव्यव्याकरणमेषां ग्रन्थानामेवाध्ययनेऽध्यापने मीमांसायां समीक्षायाञ्च व्यस्तमासीत् । दीक्षितस्यैव परम्परायां नागेशभट्टा उद्भटा वैयाकरणा अभूवन् । एषां प्रतिभा सर्वतोमुख्यासीत् । एषां परिभाषेन्दुशेखरः पाणिनीयव्याकरणस्य समुपयुक्तानां परिभाषाणां निदर्शकः सर्वमान्यः ग्रन्थो विद्यते । अपि चैतेषां शब्देन्दुशेखरो मनोरमाया विस्तृता व्याख्या विद्यते । अन्यच्चैषां 'लघुमञ्जूषा' शब्दार्थयोः सिद्धान्तानां विस्तृतमीमांसकः सर्वश्रेष्ठः ग्रन्थो विद्यते । इमे महानुभावाः काश्यामेव वसन्तः अष्टादशशतकस्य पूर्वार्धे विद्यमाना आसन् । अद्यापि काशी पाणिनि-व्याकरणस्य दुर्भेद्यो दुर्गो विद्यते । काशीवासिभिर्वैयाकरणैः पाणिनि-सूत्राणां तथ्यानां सिद्धान्तानाञ्चोन्मीलने यावान् ( यादृशः ) श्लाघनीयः प्रयत्नः कृतस्तादृशः प्रयत्नः कस्याप्यन्य-प्रदेशवासिभिर्वैयाकरणैर्न विहितः ।

## पाणिनिकाले संस्कृतभाषायाः स्थितिः

संस्कृतसाहित्यस्येतिहासस्य पर्यवेक्षणेन ज्ञायते यत्—पाणिनिकाले संस्कृतं कथनोपकथनस्य वार्ताप्रसङ्गस्य च भाषा आसीत् । यस्यां शिष्टा विशिष्टा वा जनाः स्वमनोगतभावानां प्रकटीकरणमनायासेन विना कयापि शिक्षादीक्षया कुर्वन्ति स्म । अस्य विषयस्य पुष्टयै विविधानि अनेकप्रमाणानि श्रीमद्भिराचार्यैर्गुरुवरैः बलदेव-उपाध्यायमहोदयैः संस्कृतसाहित्यस्येतिहासे प्रदत्तानि सन्ति । महर्षिणा पाणिनिना तद्युगस्य संस्कृतं 'भाषा'शब्देन व्यवहृतम् । तद्विरोधपक्षमवलम्ब्य प्राचीना वैदिका विद्वांसो भाषायै 'मन्त्रः', 'छन्दसि', निगमस्य' चैषां त्रयाणां शब्दानां प्रयोगं कुर्वन्ति स्म । येषु मन्त्रेण तात्पर्यं संहिताविषयकैर्मन्त्रैः, 'छन्दसि' इत्यस्य च तात्पर्यं मन्त्र-ब्राह्मणाभ्यां द्वाभ्यां स्तः । 'निगम'शब्दस्य प्रयोगः यास्केन सामान्यतो वेदाय कृतः, पाणिनिनाऽपि तस्मिन्नेवार्थे प्रयुक्तः । पाणिनिः वैदिकसंस्कृतस्य वैशिष्टयप्रदर्शकैः सूत्रैस्सह 'छन्दसि' इति शब्दं विनियोजयन्ति । यद्धि मन्त्राणां ब्राह्मणानाञ्च वैशिष्टयं सामान्यरूपेण सूचयति । अपरञ्च 'छन्दसि' इत्यनेन ब्राह्मणस्य भाषायाः सङ्केतमेकमवलोकयन्तु 'शीर्षंछन्दसि' इत्यस्मिन् सूत्रे—यस्योदाहरणं 'शीर्ष्णा हि सोमं क्रीतं हरन्ति' इति ब्राह्मणस्योदाहरणमस्ति । अन्यच्च 'छन्दसि' इत्यनेन सामान्यसङ्केतं

विधायैव वैदिकभाषायाः सुस्पष्टं विवेचनं कृतं पाणिनिना । अपि चानेकानि सूत्राण्युद्धृत्य यजुर्वेदस्य भाषासौष्ठवस्य परिचयः प्रदत्तः । इत्येव नहि ऋग्वेदस्य भाषायाः कतिपयवैशिष्ट्येषु पाणिनिना विशेषं योगदानं कृतम् । किम्बहुना अस्य शाब्दिकस्य दृष्टिः सर्वतोमुख्यासीत् ।

## वेदाङ्गस्य प्रतिनिधिभूतं व्याकरणं पाणिनीयम्

यद्यपि पाणिनेरनन्तरं कात्यायनस्य पतञ्जलेश्चापि विषयस्यास्य सङ्केतो न्यूनो नास्ति । तथा हि—पाणिनिना अव्याख्यातानां वैदिक-लौकिकशब्दानां व्याख्यानं कात्यायनेन स्ववार्तिकेषु कृतम् । महर्षिणा पतञ्जलिनाऽपि स्वमहाभाष्ये वैदिकभाषासमन्वितानामनेकानां सूत्राणां वार्तिकानाञ्च व्याख्यानमाकरग्रन्थानामुद्धरणैः सह कृतमिति । पतञ्जलेः वैदिकवाङ्मयस्याध्ययनमतिशयं गम्भीरमासीत् । अतस्तेन प्रदत्तो वैदिकशब्दानां सिद्धेः उल्लेखो नितरां प्रामाणिको विद्यते । काशिकायां कौमुद्यां चापि वैदिकशब्दानां व्याख्यानमुल्लेखनीयं विद्यते । अनेन प्रकारेण पाणिनीयव्याकरणस्य सम्प्रदाये वैदिकशब्दानां निष्पादनं, वैदिक-स्वरप्रक्रियायाश्च मीमांसा मार्मिकरीत्या कृता विद्यते । निष्कर्षश्चात्र विद्यते यदस्य पाणिनीयस्य व्याकरणस्य 'व्याकरणम्' इति वेदाङ्गस्य प्रतिनिधित्व-स्वीकरणं सर्वथोपयुक्तं समुचितञ्चास्ति ।

## पाणिनेः भाषावैज्ञानिकत्वम्—भाषावर्गीकरणम्

शाब्दिकशिरोमणिना पाणिनिना व्याकृता भाषा मध्यदेशे प्रयुक्ता संस्कृतभाषाऽऽसीत् । तेन 'प्राचां' तथा 'उदीचां' इति शब्दाभ्यां पूर्वभारते भारतस्योत्तरे भागे च विधीयमानानां प्रयोगाणां भिन्नता प्रदर्शिता । तद्यथा—'कुषिरजोः प्राचां श्यन् परस्मैपदं च' ( १।३।९० ) इति सूत्रस्यानुसारं कर्मकर्तरि प्रयोगे 'कुष्यति' इति भवति पूर्वीयक्षेत्रे, अन्यत्रात्मनेपदस्य प्रयोगो भवति । क्वचिच्च—प्राचाम् उदीचाम् इत्यनयोः परस्परं प्रयोगविरोधस्य प्रदर्शनमस्ति । अनेन प्रकारेण पाणिनेः समये भाषादृष्ट्या खण्डत्रये विभक्तं भारतं प्रतीयते । यथा—प्राच्यप्रदेशः, उदीच्यप्रदेशो मध्यदेशश्च । 'प्राचां' तथा 'उदीचां' इत्यस्य विभाजिका नदी 'काशिकानुसारं शरावत्यासीत् या पञ्चनदप्रदेशस्य 'शरदण्डा' नदी प्रतीयते । तथा चोक्तम्—

'प्राङुदञ्चौ विभजते हंसः क्षीरोदके यथा ।
विदुषां शब्दसिध्यर्थं सा नः पातु शरावती' ॥

अनेन प्रकारेण शरावती भागद्वये भारतं विभाजयति—प्राच्योदीच्यभेदाभ्याम् । एवमेव 'अह्नन्नवं नगरेऽनुदीचाम्' इत्यत्र 'अनुदीचाम्' इत्यनेन मध्यदेशः सङ्केतितः । पाणिनयः स्वयमुदीच्या आसन् । अतः उत्तरभारतस्य नगरैः ग्रामैः नदीभिः जातिभिश्च तेषां प्रगाढपरिचयः स्वाभाविकः । कदाचित्काले उदीच्यदेशस्य भाषायाः प्रभुत्वं विशेषरूपेणासीत्, तत्रत्यैव भाषा अतीव विशुद्धाऽऽसीत् । तद्युगीना जनाः संस्कृतभाषाप्रशिक्षणायोदीच्यप्रदेशे गच्छन्ति स्म, स्वदेशे प्रत्यावर्तिते सति समादरस्य सत्कारस्य च पात्रा भवन्ति स्म । तथा चोक्तं शाङ्खायनब्राह्मणे ( ८।६ )—'उदञ्च एव यन्ति वाचं

शिक्षितुम् । यो वै तत आगच्छति तं शुश्रूषन्ते' । अत्र सारभूतं भाषावैज्ञानिकं तथ्यमिदं वर्तते यत्—मध्यदेश एव आर्यसंस्कृतेः निरूपकः प्रतिष्ठापकश्चासीत्, अस्मात् कारणाच्च तद्देशस्य भाषाऽपि कालान्तरे समस्तस्य 'आर्यावर्तस्य' मान्या स्वीकरणीया च भाषाऽभवत् । इदमेव तथ्यं न्यायसङ्गतश्च ज्ञायते ।

## व्याकरणस्य व्याख्यातारः

**पूर्वपीठिका**—व्याकरणस्येतिहासविदो विद्वांसः कथयन्ति यत्—व्याकरणशास्त्रस्य यथार्थरूपेणोद्भवो महर्षेः पाणिनेः कालादारभ्य पतञ्जलिकालपर्यन्तं चरमावस्थायामासीत् । तच्छास्त्रस्य विकासक्रमस्तत्रैवावरुद्ध आसीत् । परञ्च तत्पश्चाद्वर्तिनो विद्वांसः पाणिन्याद्याचार्याणां कृतीनां व्याख्यादिकं लिखन्ति स्म । सैष व्याख्याकालः ।

पतञ्जलेः बहोः कालानन्तरं पाणिनि-कात्यायन-पतञ्जलिभिरतिप्रभावितेन चन्द्रेण ( चन्द्रगोमिना वा ) नवीनस्यैकस्य व्याकरणस्य रचना कृता । अस्मिन् कार्ये त्रिमुनीनां पूर्ववर्तिनामाचार्याणां विपुलं साहाय्यं तेन प्राप्तम् । इमे चन्द्रमहाशया बौद्धमतावलम्बिन आसन् । अतः एषां व्याकरणरचनाया मूलोद्देश्यमासीत्—स्वसम्प्रदायानुकूलस्य व्याकरणस्य विरचनम् । तत्र साफल्यं तु प्राप्तं, परञ्च बहुलोकप्रियं नासीदतः शनैः शनैः नामशेषतां प्राप । अस्य व्याकरणस्य रचनाकालः ४७० ईसवीयात् ६५० ईसवीयपर्यन्तं लम्बायमानो विद्यते ।

वस्तुतो व्याकरणशास्त्रस्य व्याख्याकालो वामनजयादित्याभ्यां प्रारभ्यते, याभ्यां काशिका विनिर्मिता । सेयं काशिका वृत्तिसूत्रमपि कथ्यते । चीनयात्रिणः इत्सिङ्गस्यैतिहासिकपर्यालोचनेनानयोः समयः षष्ठशतकः प्रतीयते । केचन भ्रान्ता जना द्वावप्येक एवेति कथयन्ति, तन्न स्वीकारयोग्यः । यतो हि—सुप्रसिद्धेन वैयाकरणेन भट्टोजिदीक्षितमहाशयेन प्रौढमनोरमायां प्रतिपादितं यदेतौ भिन्ननामकौ द्वावाचार्यावास्ताम् । तेन लिखितं यत्—'एतत्सर्वं जयादित्यमतेनोक्तं वामनस्त्वाह' इति । खेदजनकोऽयं विषयो यदनयोः सम्बन्धे विशिष्टं ज्ञानं न प्राप्यते । परञ्चैतत्सत्यं यदिमौ बौद्धावास्ताम् । केचन जना जयादित्यं जयापीड इत्यप्यामनन्ति वामनञ्च कल्हणः । न समुचितमेतत् । बुहलरमहाशयमतेनैतौ काश्मीरनिवासिनौ स्तः ।

काशिका व्याकरणस्य प्रकाशिका विद्यते । इयं पाणिनेः अष्टाध्यायीसूत्रेषु भाष्यभूता विद्यते । अस्या व्याख्याया महद्वैशिष्टयं विद्यते यत्—अत्र सूत्रेष्वनुवृत्तीनामपि निर्देशोऽभवत् । प्रत्येकेन नियमेन सहानेकान्युदाहरणानि सन्ति । काशिकाया प्रधानं प्रयोजनमस्ति—चन्द्रगोमिना कृतस्य व्याकरणस्य प्रगतिं पाणिनीयसम्प्रदायेन सह सम्मेलनम् । एतद्विपरीतं काशिकायां चन्द्रगोमिनः प्रभावोऽत्यधिको विद्यते ।

काशिकायाः पश्चात्काले न्यासस्याभिधानं समायाति । न्यासः काशिकाया व्याख्या विद्यते । तन्नाम 'काशिका-विवरण-पञ्जिका' विद्यते । अस्य रचयिता जिनेन्द्रबुद्धिः । स्वव्याख्याया विषये ते कथयन्ति—

'अन्यतः सारमादाय कृतैषा काशिका यथा ।
वृत्तिस्तस्या यथाशक्ति क्रियते पञ्जिका तथा' ।।

जिनेन्द्रबुद्धिः स्वात्मानं बोधिसत्त्वदेशीयाचार्यरूपेण ख्यापयति। अस्योल्लेखो-भामहेन कृतः, अतः एतेषां कालः ७५० ईसवीयाभ्यन्तरो विद्यते। न्यासे जैनेन्द्रबुद्धिना काशिकाया एवानुसरणं कृतं, विकासक्रमे यत्किञ्चिदागतमासीत् तत्सर्वमनेनोल्लिखितम्। अद्यत्वेऽस्य कापि सम्पूर्णा प्रतिर्नोपलभ्यते।

**पदमञ्जरी**—काशिकोपरि बृहती टीका हरदत्तस्य पदमञ्जरी विद्यते। पद-मञ्जरीटीकाकारो हरदत्तः पद्मकुमारस्यात्मजस्तथा अग्निकुमारस्यानुज आसीत्। आश्रयदातुर्नाम—अपराजित आसीत्। एते तमिलदेशनिवासिनः सन्ति। अस्य कालो नवमशतकोऽनुमीयते। इयं मञ्जरी कैयटस्य महाभाष्यप्रदीपस्य पश्चाद्वर्तिनी रचना प्रतीयते। कैयटस्य च कालोऽष्टमशतकेसवीयस्य।

**वाक्यपदीयम्**—व्याख्याक्षेत्रे वाक्यपदीयस्य स्थानं महद्गौरवपूर्णमस्ति। अस्य रचयिता भर्तृहरिः प्रख्यातो वैयाकरणः सुकविश्चासीत्। अस्य कालः ईसवीयस्य सप्तमः शतकः स्वीक्रियते। श्रूयते यदेतेन महाभाष्योपर्येका टीकाऽपि लिखिता सा चापूर्णा-ऽऽसीत्। गणरत्नमहोदधौ उल्लेखोऽस्ति यत्—सैषा व्याख्या केवलं त्रिषु पादेष्वे-वासीत्। वाक्यपदीये च व्याकरणदर्शनस्योपरि छन्दोबद्धा वृत्तिर्विद्यते। अस्मिन् सन्ति त्रीणि काण्डानि महत्त्वपूर्णानि। तद्यथा—ब्रह्मकाण्डमथवा आगमकाण्डम्, वाक्यकाण्डम्, पदकाण्डमथवा प्रकीर्णकाण्डञ्चेति।

कैयटस्य 'महाभाष्यप्रदीपा'नन्तरं व्याकरणशास्त्रस्य द्वितीयं चरणं समाप्तमिव प्रतीयते। अस्य चरणस्य शुभारम्भः चन्द्रगोमिना कृतः पर्यवसानञ्चैकादशे शतके कैय-टेन कृतम्। सम्भाव्यते कैयटः काश्मीरे वसति स्म। अस्य पितुर्नाम जय्यट आसीत्। काव्यप्रकाशस्यैकस्यां टीकायां समागतस्योल्लेखस्यानुसारमयं मम्मटस्यानुजः शिष्यश्चा-प्यासीत्। अस्यामुव्वटस्यापि चर्चा विद्यते। उव्वटमहाशयाः सम्भवतो यजुर्वेदभाष्य-काराद्भिन्नाः सन्ति। एभिः महाभाष्ये एका टीका विलिखिता। यस्याः समीक्षणमा-लोचनं वा नागेशेनापि कृतम्—यत्प्रदीपोद्योत इति नाम्ना सुप्रसिद्धमस्ति। कैयटस्य कालः त्रयोदशशतकान्तरालवर्ती विद्यते। सर्वदर्शनसङ्ग्रहे एतेषामुल्लेखो विद्यते।

एतावत्कालपर्यन्तं संस्कृतभाषायाः पाणिनिकालीनं स्वरूपं दूरीकृत्य परिवर्तितम-भूत्। संस्कृतम्—अलङ्कृता परिष्कृता च भाषा सम्भूय भारतस्य राष्ट्रभाषा बभूवेति जनश्रुतिः।

## व्याकरणस्य प्रक्रियाकालः

एतत्तु सुनिश्चितमस्ति यत्—त्रिमुनिषु पतञ्जलिपर्यन्तं व्याकरणस्य सत्ता पूर्ण-रूपेण प्रतिष्ठिताऽऽसीत्। तत्पश्चाद्वर्तिषु ग्रन्थेषु व्याख्यातारो व्याख्यामकुर्वन्। परञ्च व्याकरणस्य स्थितिः सारल्यापेक्षया जटिलैव सञ्जाता। तेन तद्ज्ञाने काठिन्यमेवा-यातम्। दुरूहता समागता। अतस्तस्मिन् काले सारल्यस्यापेक्षाऽऽसीत्। एतादृशेऽवसरे विमलसरस्वतीमहाशयस्य योगदानं सरलीकरणे प्रशंसनीयमासीत्। तेन १३५० ईसवीये वर्षे 'रूपमालायाः' रचना कृता।

अस्यां रूपमालायां क्रमेण प्रत्याहारस्य, संज्ञायाः, परिभाषायाः, स्वरसन्धेः, प्रकृति-

भावस्य, व्यञ्जनसन्धेः विसर्गसन्धेश्च निरूपणं विद्यते। तत्पश्चाच्च हलन्तस्य, सर्वनाम्नः, वैदिकविकल्पस्य, निपातस्य, स्त्रीप्रत्ययस्य, कारकस्य, आख्यातस्य, कृतः, तद्धितस्य समासस्य च विवेचनमस्ति। ग्रन्थोऽयं पश्चाद्वर्तिनीनां कौमुदीनामाधारभूमिर्विद्यते।

रूपमालाया अनन्तरं रामचन्द्रस्य 'प्रक्रियाकौमुद्याः' स्थानमायाति। सोऽयं रामचन्द्रः पञ्चदशशतकस्य पूर्वार्धे विद्यमान आसीत्। इमे व्याकरणस्य, ज्यौतिषस्य वेदान्तस्य च तलस्पर्शिनः पण्डिता आसन्। प्रक्रियाकौमुदी भट्टोजिदीक्षितस्य ग्रन्थप्रणयने महत्साहाय्यं करोति। अस्मिन् महनीये ग्रन्थे टीकाद्वयी उपलभ्येते। तत्र विट्ठलाचार्यस्य 'प्रसाद'नाम्नी, शेषकृष्णस्य च 'प्रक्रियाप्रकाश'नाम्नी टीका विद्यते। अनयोष्टीकाकारयोः कालः क्रमशः १५४८, १६०० ईसवीयवर्षो विद्यते।

तत्पश्चाच्च--सुप्रसिद्धस्य भट्टोजिदीक्षितस्य कालः समायाति। एतेषां 'सिद्धान्तकौमुदी' नामको ग्रन्थोऽतीव सुप्रसिद्धो लोकप्रियश्चास्ति। अस्य ग्रन्थस्य तथा प्रचारः प्रसारश्चाभवत् येन व्याकरणाध्येतॄणां मध्ये मौलिमणिरिव विराजते। केनापि प्रबुद्धेन समीक्षकेण सत्यमेवोक्तं यत्--

'कौमुदी-यद्यायाति वृथा भाष्ये परिश्रमः।
कौमुदी यदि नायाति वृथा भाष्ये परिश्रमः' ॥

एतेनास्य ग्रन्थस्य महनीयतोपादेयता च स्वयमेव सिद्ध्यति। श्रीदीक्षितमहोदयस्य पितुर्नाम लक्ष्मीधर आसीत्। अस्य जनिः १६३० ईसवीये वर्षे बभूव। स्वविरचितायां सिद्धान्तकौमुद्यां स्वयमेव टीकामटीटिकत। यस्याः 'प्रौढमनोरमा' इत्यभिधा विद्यते। अस्याः कौमुद्या एव 'बालमनोरमा' नाम्नी टीका विद्यते। अपरञ्च एभिः पाणिनीयधातुपाठे लिङ्गानुशासने चापि टीका विलिखिता। अन्यच्चैते काशिकेवाधारभूमौ शब्दकौस्तुभस्य रचना विहिता। प्रौढमनोरमायाष्टीका जगन्नाथेन विरचिता, एतदतिरिक्तं नागेशेनापि टीकिता। एवञ्च सिद्धान्तकौमुद्यां ज्ञानेन्द्रसरस्वतीमहाशयस्य 'तत्त्वबोधिनी' अन्वर्थनाम्नी लोकप्रिया च टीका विद्यते। अस्याष्टीकायाः पठनपाठने महानुपयोगो भवति। अस्मिन्नेव क्रमे नागेशभट्टाः सुगृहीतनामधेयाः प्रकाण्डपण्डिता लेखकाश्चासन्। एभिः धर्मस्य, योगस्य, अलङ्कारस्य, व्याकरणस्य चानेके ग्रन्था विलिखिताः। अपि च कैयटस्य 'महाभाष्यप्रदीपे' उद्योत-नाम्नी टीका एभिः विरचिता।

एतदतिरिक्तं परिभाषेन्दुशेखरे, लघुशब्देन्दुशेखरे, शब्दरत्ने, प्रौढमनोरमायाश्च टीकायाः रचनाः एभिः कृताः। इत्येव नहि—'वैयाकरणसिद्धान्तमञ्जूषा' व्याकरणदर्शनस्योपरि ग्रन्थोऽस्त्येषाम्। एते काले इत्युपाधिसम्पन्नाः महाराष्ट्रप्रदेशीयाः ब्राह्मणा आसन्। उपर्युक्ताः सर्वे ग्रन्थाः भट्टोजीदीक्षितसम्प्रदायस्य सन्ति।

तथा चैतादृशान्यनेकानि पुस्तकानि लिखितानि सन्त्यन्य सम्प्रदायस्य। यथा—अन्नम्भट्टेन विदुषा 'अष्टाध्याय्यां' मिताक्षरानाम्नी टीका लिखिता। एवमेव वरद-

राजेन मध्यसिद्धान्तकौमुदी, लघुसिद्धान्तकौमुदी, सारसिद्धान्तकौमुदी नामकाश्च ग्रन्थाः विरचिताः। इमे ग्रन्थाः छात्राणां व्याकरणाध्ययनाय महत्त्वपूर्णाः सन्ति।

काशिका-सिद्धान्तकौमुद्योश्च द्वयोरप्येकमुद्देश्यमस्ति, परञ्च शैल्यां भिन्नता समायाति। तेन लाभोऽपि विद्यते हानिरपि। एतेनेति विज्ञेयं यत् प्रक्रियाकालः इत्येव, मुख्ये गृहीते गौणाः स्वयमेवावगता भवन्ति। इत्यलं पर्यालोचितेन।

## व्याकरणस्य विभिन्नाः सम्प्रदायाः
## ( पाणिनेः पश्चाद्वर्तिनः )

प्राचीनकालात् शास्त्राणां विकासाय सुरक्षायै च समये समयेऽनेके सम्प्रदायाः प्रवर्तिता आसन् सन्ति च। व्याकरणशास्त्रस्यापि तादृशी स्थितिर्वर्तते। पाणिनिकालादारभ्य वरदराजपर्यन्तं विकासस्य सुदीर्घा परम्परा दृश्यते। एतदतिरिक्तं व्याकरणशास्त्रे अपाणिनीया परम्पराऽपि प्रचलिताऽऽसीत्। तदित्थमनेके सम्प्रदायाः प्रचलिताः, ये पाणिनेः सूत्रेषु तद्व्याख्यासु च यत्किञ्चित्परिवर्तनं परिष्करणं वा विधाय स्वसम्प्रदायविकासाय प्रयत्नं चक्रुः। एषु केनाप्याचार्येण सूत्रेषु न्यूनता कृता, केनापि च स्वानुकूलं नामपरिवर्तनञ्च कृतम्। भवतु नाम केनापि दिशा शास्त्रचिन्तनस्य। तेन शास्त्रसरणिः प्रवर्द्धते एव। तथा च—'श्रुतिर्विभिन्नाः स्मृतयो विभिन्ना नैको मुनिर्यस्य मतं न भिन्नमिति कृत्वा सम्प्रदायानां प्रवर्तनं नानुचितमिति। प्रस्तुतेऽस्मिन् विचारक्रमे पाणिनेः उत्तरवर्तिषु सम्प्रदायेषु येऽधुनापि जीविताः निःश्वसन्तो वा सन्ति, तेषां नामान्यधोलिखितानि सन्ति। तद्यथा—

( १ ) चान्द्र-सम्प्रदायः, ( २ ) जैनेन्द्रसम्प्रदायः, ( ३ ) शाकटायनसम्प्रदायः, ( ४ ) हैमसम्प्रदायः, ( ५ ) कातन्त्रसम्प्रदायः, ( ६ ) सारस्वतसम्प्रदायः, ( ७ ) वोपदेवसम्प्रदायः, ( ८ ) क्रमदीश्वरजौनरसम्प्रदायः, ( ९ ) सौपद्मसम्प्रदायश्चेति। एतादृशा अन्येऽपि सम्प्रदाया भविष्यन्ति ये कालप्रवाहे कवलिता लुप्ता वा सञ्जाताः, प्राधान्यं वा नोपतस्थिरे।

**तत्रादौ चान्द्रसम्प्रदायः**—अस्य सम्प्रदायस्य जीवनं चिरजीवनं नाभूत्। यतो हि भर्तृहरेः वाक्यपदीयं यावदस्य चरमा सीमाऽसीत्। महाकवेः कालिदासस्य मेघदूतस्य व्याख्यावसरे मल्लिनाथविद्वांसः कथयन्ति यत्—पाणिनिमतेन 'विश्रम'शब्द एव समुचितस्तत्रैव चान्द्रसम्प्रदायस्यानुसारं विश्रामोऽपि साधुरेव। चान्द्रव्याकरणं काशिकायाः पूर्ववर्तित्वं धारयति। काशिकायां चान्द्रव्याकरणस्य काचित् सामग्री गृहीता वर्तते। अपरञ्च स्वनिर्मिते व्याकरणे चन्द्रगोमिना वृत्तिरपि विरचितेति श्रूयते। तत्र 'अजयद् गुप्तो हूणान्' इत्युल्लेखमादाय, यशोधर्मणो बहिष्कारश्चादाय चन्द्रगोमिनः कालः षष्ठशतकः ( ५४४ ई० ) स्वीकर्तुं योग्यः।

**चान्द्रव्याकरणस्य पाणिनेः व्याकरणाद्विभिन्नता**—यद्यपि चान्द्रव्याकरणं पाणिनिकात्यायन-पतञ्जलि-त्रिमुनीनां व्याकरणे एवाधारितं तद्विकासात्मिका प्रक्रिया च विद्यते। तथाप्यस्मिन् सरलीकरणाय वैदिकीस्वरप्रक्रियायाः केचन नियमाः परित्यक्ताः। चन्द्रगोमिना प्रत्याहारसूत्राणि अपि न्यूनीकृतानि। यथा—'हयवरट् लण्'

एतत् सूत्रं 'हरवरलण्' इति परिवर्त्तितम् । क्वचिच्च पाठसौविध्यायापि परिवर्तनं कृतम्, यथा—'अनेकाल् शित् सर्वस्य' इति पाणिनीयसूत्रं 'शिदनेकाल सर्वस्य' इति कृतम् । अपि चैतैः पञ्चत्रिंशत् सूत्राणि परिवर्द्धितानि, परञ्च कैयटेन तच्छूत्राणि 'अपाणिनीयः सूत्रेषु पाठः' इति कथितः ।

चान्द्रव्याकरणग्रन्थे षडध्यायाः सन्ति, प्रत्येकस्मिन् अध्याये चत्वारो पादाः सन्ति । चान्द्रव्याकरणस्य प्रधानमुद्देश्यमासीत् नूतनरीत्या सज्जीकरणं मात्रमासीत् । अनयोर्द्वयोः व्याकरणयोः किञ्चित् परिवर्तनेन सह साम्यमेवास्ति । मतभेदः स्वल्पः । स्वविरचितैः सूत्रैः सह चन्द्रगोमिना 'उणादेः' धातुपाठस्य, लिङ्गानुशासनादीनामपि रचना विहिता । चान्द्रस्योणादिपाठः पाणिनेर्भिन्नः ।

चान्द्रव्याकरणस्योपरि चन्द्रगोमिनो वृत्तिरप्यस्ति, पश्चाच्च धर्मदासेनापि वृत्ति-र्विरचिता । अपरञ्चास्मिन् व्याकरणे कालान्तरे विविधाष्टीका लिखिता भवेयुः यतो हि तिब्बतप्रदेशे एतद्विषयकग्रन्थानामनुवादा अद्याप्युपलब्धा भवन्ति । परञ्च खेदस्य विषयोऽयं वर्तते यत्पश्चाद्वर्तिकाले चान्द्रव्याकरणस्य लोप एव जातः । एतस्यानेकानि कारणानि सन्ति । प्रथमतस्त्वस्मिन् मौलिकताया अभाव एवासीत्, अन्यच्चा-पाणिनीय आसीत्, अत एव पाणिनि-सम्प्रदायेऽस्य तथा समादरो नासीत् । अन्यच्च कारणमस्ति—बौद्ध-मतानुयायिनी व्याख्याविधानात् बौद्धानां पतनेन सहास्यापि पतनं जातम् । चान्द्रव्याकरणस्य प्रचारो लङ्कायामप्यासीत् । तत्र काश्यपनामकेन बौद्धेन बालबोधनामको ग्रन्थो विरचितः । स ग्रन्थः परां प्रसिद्धिं प्राप, तत्समक्षं चान्द्रव्याकरणस्य ख्यातिर्नामशेषतां प्रापेति दिक् ।

**जैनेन्द्रसम्प्रदायः**—इति तु सुविदितमस्ति यत्—जैन-सम्प्रदायस्य सर्वतन्त्रं स्वतन्त्रं स्वकीयं व्याकरणमस्ति । अस्य व्याकरणस्य विषये एषा जनश्रुतिर्वर्तते यत्—तीर्थङ्करो महावीरो यदाऽष्टवर्षीय आसीत्तदा कदाचिदिन्द्रेण महावीरमुद्दिश्य शब्दविषयकाः केचन प्रश्नाः पृष्टाः । एषामेव प्रश्नोत्तराणां क्रमे व्याकरणस्य निष्पत्तिर्जाता । एतस्मात् कारणादेव द्वयोर्नाम्नाऽस्य व्याकरणस्य नामकरणमभूत् । एतदेव जैनेन्द्र-व्याकरणम् । अत्र जैनपदेन महावीरस्य ग्रहणमिन्द्रश्च स्वयमेवेन्द्रः । अस्य व्याकरणस्य च लेखको 'देवनन्दी' इति विज्ञायते । तथा चोक्तमस्य विषये—

'लक्ष्मीरात्यन्तिकी यस्य निरवद्यावभासते ।
देवनन्दित-पूजेशं नमस्तस्मै स्वयम्भुवे' ॥

अपरञ्च बोपदेव-हेमचन्द्रादिभिर्विद्वद्भिः 'देवनन्दी' महाशयस्योल्लेखः कृतः । अस्यापरं नाम 'पूज्यपाद' इत्यपि विद्यते । जैनेन्द्रव्याकरणस्यापि कालश्चान्द्रस्यैव काल आसीत् । साम्प्रतं जैनेन्द्रव्याकरणस्य संस्करणद्वयमुपलब्धमस्ति । तत्र लघु-संस्करणे त्रीणि सहस्राणि ३००० सूत्राणि सन्ति, महत् संस्करणे च ७०० सूत्राण्यधि-कानि सन्ति । अस्मिन् सोमदेवस्य टीका विद्यते । अस्याष्टीकायाः रचनाकालविषये लेखकस्य कथनं विद्यते यदस्या रचना १२०५ ईसवीये वर्षेऽभूदिति । एवञ्च विद्वांसः कथयन्ति यत्—जैनेन्द्रव्याकरणे मौलिकताया अभावो विद्यते । अपि चास्मिन्

पाणिनिसूत्राणां यथासम्भवं स्वसम्प्रदायानुकूलं विधाय गृहीतमस्ति । क्वचित् परिवर्तनमपि दृश्यते, तद्यथा—'विभाषा' 'अन्यतरस्यां' इति स्थाने 'वा' इति विहितः ।

अस्मिश्च पाणिनीयप्रत्याहारास्तु गृहीताः सन्ति, परञ्च चतुर्दश शिवसूत्राणि ( अइउण् इत्यादीनि ) वैदिकव्याकरणं ( स्वरप्रक्रियां ) च न गृहीतम् । देवनन्दिना नव-नवाः पारिभाषिकशब्दाः व्यवहृताः । तेन व्याकरणस्य दुरूहता सञ्जाता । अस्य सम्प्रदायस्य ग्रन्थेषु टीकाद्वयमुपलब्धमस्ति । तत्र प्रथमा टीका अभयनन्दिनः, द्वितीया च सोमदेवस्य शब्दार्णवचन्द्रिका । सोमदेवः स्वात्मानं शिलाहारराज्ञो भोजस्य समकालिकः स्वीकरोति । अस्यां परम्परायां स्युरन्याष्टीकाः, परञ्च ताष्टीकाः नोपलभ्यन्ते ।

अपरञ्च जैनेन्द्रसम्प्रदायस्य पठन-पाठनाय पाठ्यग्रन्थोऽपि विद्यते । यः व्याकरणस्य प्रारम्भिक-छात्रेभ्यो नितान्तामुपयोगितां धारयिष्यति । यस्य ग्रन्थस्य नाम 'पञ्चवस्तु' इति विद्यते । अस्य ग्रन्थस्य लेखकः 'श्रुतिकीर्तिः' इति कथ्यते । अस्य कालश्च १०५० ईसवीयेऽस्ति—इत्याचार्यपाठकाः स्वीकुर्वन्ति ।

**शाकटायनसम्प्रदायः**—अस्य सम्प्रदायस्य शाकटायनव्याकरणमपि जैनेन्द्रसम्प्रदाय-व्याकरणस्य क्वचित् साम्यं बिभर्ति । अस्यापि मूलोद्देश्यं तदेवासीत्, यत् जैनेन्द्र-व्याकरणस्य । तथापीदं व्याकरणं विशेषतः श्वेताम्बरजैनसम्प्रदायाय लिखितमासीत् इति विदुषां मतम् । अस्य व्याकरणस्योल्लेखः 'गणरत्नमहोदधौ' माधवीये धातुवृत्तौ समायाति । तेन प्रतीयते यत्कदापि कालेऽस्य प्रचारश्चरमसीम्नि आसीत् । अस्य व्याकरणस्य प्रणेता शाकटायनः प्राचीनो नवीनो वेति विषये विदुषामैकमत्यं नास्ति । विद्वांसः कथयन्ति यत् नायं निरुक्तप्रोक्तं चर्चितश्च पाणिनिना । नवीनः कोऽप्ययं वैयाकरणः इति चाप्यामनन्ति । अस्मिन् विषये डॉ० कीलहार्नमहोदयाः शाकटायनमैतिहासिकं पुरुषं न स्वीकुर्वन्ति । कथयन्ति च केनापि जैनेनास्य ग्रन्थस्य रचना विहिता । प्राचीनत्वख्यापनाय शाकटायनेन सह गोजितः । एतद्विपरीतं 'आचार्यपाठकमहोदया एनमैतिहासिकपुरुषरूपेण स्वीकुर्वन्ति' तथा च राष्ट्रकूटस्य राज्ञोऽमोघवर्षस्य प्रथमस्य ( ८१७–८७७ ई० ) समकालिकोऽयमिति कथयन्ति ।

शाकटायनेन स्वशब्दानुशासने पाणिनि-कात्यायन-पतञ्जलि-चन्द्रगोमिभ्यश्च सामग्री गृहीता, स्वातन्त्र्येण तासामुपयोगश्चापि कृतः । अस्मिन् शब्दानुशासने पूज्य-पादादपि यत्किञ्चिद् गृहीतम् । नात्र काचिन्नवीनता । अस्मिन् शब्दानुशासने चत्वारोऽध्यायाः सन्ति, प्रत्यध्याये चत्वारः पादाश्च । सूत्राणां संख्या ३२०० इत्यस्ति । जैनेन्द्रव्याकरणवत् अत्रापि सूत्राणां परिवर्तनविधानमस्ति ।

सम्प्रदायोऽसौ भागद्वये विभक्तस्तत्र प्रथमे भागे टीका उपटीकाश्च लिखिताः । द्वितीये च स्वल्पकायाः पाठ्यग्रन्थाः । आसु टीकासु 'न्यासः' प्रसिद्धो वर्तते । सम्भाव्यते न्यासोऽयं प्रभाचन्द्राचार्यस्य, येनामोघवृत्तावपि टीका लिखिता । अन्या टीका चिन्तामणिर्विद्यते, लेखकश्चात्र 'यक्षवर्मन्' इति । अस्मिन् सम्प्रदाये लघु ग्रन्था अपि विरचिता आसन् । तेषु प्रक्रियासंग्रहस्य लेखक अभयचन्द्राचार्य आसीत् । अयं ग्रन्थः १३५९ ईसवीयवर्षस्य नैकट्यं धारयति ।

**हैम-सम्प्रदायः**—ख्यातिप्राप्तोऽयं व्याकरणसम्प्रदायः। अस्य प्रवर्तको हेमचन्द्राचार्यः। एषां कालः एकादशशतकान्तरालवर्ती विद्यते। इमे जात्या वणिज आसन्। प्राग्भिन्ननामकोऽयं जैनधर्मे दीक्षितत्वात् नामपरिवर्तनं जातम्। तच्च—'सिद्धहेमचन्द्राभिधस्वोपज्ञशब्दानुशासन' इत्यस्ति। पाणिनेरष्टाध्यायीवदस्मिन् अष्टावध्यायाः सन्ति। प्रत्येकस्मिन् अध्याये च चत्वारः पादाः। अस्यावसाने प्राकृतभाषाया अपि व्याकरणं विद्यते। हेमचन्द्राचार्येण स्वसूत्रेषु 'शब्दानुशासनबृहद्वृत्ति'नामको ग्रन्थो लिखितः। एवञ्च—'अपरः' 'परः' 'अन्यः' इति कथयित्वा भिन्नविचारान् सदोषान् इति कथयित्वा प्रमाणीकृतः। बृहद्वृत्तौ सप्ताध्यायानां संक्षेपीकरणमप्युपलभ्यते। तस्या वृत्तेर्लेखकोऽपि हेमचन्द्राचार्य एव। अस्यां मौलिकताया अत्यन्ताभावो विद्यते। व्याकरणस्य नियमानामुदाहरणार्थैते स्वयमेव पद्यरचना कृता। इयमेव रचना 'द्रव्यसार'महाकाव्यमस्ति। हैमव्याकरणेन सह—धातुपाठ-उणादि-लिङ्गानुशासनादयोऽपि सन्ति।

हैमशब्दानुशासने बृहद्वृत्ति ढुण्ढिकाऽपि विद्यते, परञ्चाधुनेयमपूर्णा प्राप्यते। अन्या वृत्तिरपि 'देवेन्द्रसूरि' इत्यस्य मिलति, यस्या नाम 'हेमलघुन्यासो' विद्यते। तृतीया टीका शब्दमहार्णवन्यासो विद्यते। हेमस्य शब्दानुशासने लघुकाया ग्रन्था अपि लिखिताः सन्ति। एतादृशेषु ( एतादृक्षु ) ग्रन्थेषु 'हेमलघुप्रक्रिया—हैमकौमुदी' चाप्यस्ति। ययोर्लेखकौ विनयविजयाग्नि-मेधाविजयौ स्तः। हेमकौमुद्या अपरं नाम चन्द्रप्रभाऽप्यस्ति।

**कातन्त्रसम्प्रदायः**—कातन्त्रव्याकरणस्यैवापरं नाम कौमारव्याकरणमथवा कलापव्याकरणमप्यस्ति। अत्र विभिन्ननामकरणे सैषा कथाऽनुसन्धेया—दाक्षिणात्यदेशे सातवाहननामको राजा बभूव। एकस्मिन् दिवसे राजा जलकेलिं समाचरन् आसीत्, तदैव राज्ञी अवोचत्—'मोदकं देहि राजन्' अस्योत्तरे राजा तस्यै कश्चित् मोदकमददात्। पश्चाद् ज्ञाते तथ्ये स्वसभापण्डितं सर्ववर्माणमेकमेतादृशं व्याकरणं निर्मातुमादिदेश, येन सत्वरं व्याकरणज्ञानं भवेत्। सभापण्डितेन तपसा शिव आराधितस्तेषामाज्ञया कुमारकार्तिकेयात् तेन व्याकरणमधिगतम्। द्वयोर्मध्ये माध्यमः 'कलापः' ( मयूरः ) आसीदतोऽस्य नाम कलापव्याकरणमप्यभूत्। अस्य व्याकरणस्योपरि सर्वाधिका प्राचीना टीका दुर्गसिंहस्यास्ति, यस्याष्टीकायाः कालोऽष्टमशतको विज्ञायते। अस्मिन् व्याकरणे क्रमशः—सन्धि-नाम-आख्यात-कृत्प्रकरणानि सन्ति। राजाश्रयत्वात् प्रचारोऽपि तादृश एवाभवत्। तस्मिन् काले सुबोधं व्याकरणन्त्विदमेवासीत्। अस्य वैशिष्टयं चातुर्यं वाऽऽसीत् यत्—पाणिनेः सहस्रचतुष्टयसूत्राणि ८५३ सूत्रेषु ग्रथितान्यासन्। अस्यां वृत्तावप्यनेकानां वृत्तीनां रचना अभूत्। अस्यां सर्वप्रथमं 'कातन्त्रविस्तरोऽस्ति। अस्य लेखकस्य वर्धमानस्य नाम काव्यकामधेनौ बोपदेवेन बहुशश्चर्चितम्।

त्रिलोचनदासस्य 'कातन्त्रवृत्तिपञ्जिका' इत्यस्याः रचना वर्धमानादनन्तरमभूत्। एकाऽन्यापि टीका विद्यते—महादेवस्य 'शब्दसिद्धिः'। अस्य सम्प्रदायस्य व्याकरण-

स्योपरि उणादि-धातुपाठादीनां रचना दुर्गसिहेन कृताऽऽसीत्। कातन्त्रसम्प्रदायस्य प्रचारो वङ्गप्रदेशे काश्मीरे चाप्यासीत्।

**सारस्वत-सम्प्रदायः**—सारस्वतव्याकरणस्य प्रारम्भकालः १२५० ईसवीयात् पूर्वं न सम्भाव्यते। बोपदेवेनास्य व्याकरणस्योल्लेखो न कृतः। अपरञ्चैतदतिरिक्तमस्योपरि याष्टीका विरचितास्ताः सर्वाः पञ्चदशशतकस्य निकटवर्तिन्यः सन्ति। अस्य व्याकरणस्य प्रचारसीमोत्तरभारतस्य स्वल्पेषु स्थानेष्वेव सीमिताऽऽसीत्। सारस्वत-व्याकरणस्य सप्तशतसूत्रेष्वेव पाणिनेः ४००० सूत्राणि समाहितानि सन्ति।

सारस्वत-सम्प्रदायस्य महद्वैशिष्टचं विद्यते संक्षेपीकरणम्। एतत् पूर्वं कस्मिन्नपि सम्प्रदाये एतादृशं लघुव्याकरणं नासीत्। संक्षेपीकरणादप्यधिकं महत्त्वपूर्णं तत्त्वमस्ति सारल्यम्। वाग्देवतायाः सरस्वत्याः प्रसादाद् अनुभूतिस्वरूपाचार्येणास्य रचना कृता। अत एवास्य नाम सारस्वतसम्प्रदायो विद्यते। लेखकस्य समयः १२५० ईसवीयात् १४५० ईसवीयमध्ये स्वीक्रियते। सारस्वतप्रक्रियायां बह्व्यष्टीकाः समुपलभ्यन्ते। टीकाकाराणां नामानि तत्समयश्च यथा—

( क ) पुञ्जराजा—पञ्चदशशतकस्यान्तिमो भागः।
( ख ) अमृतभारती—१५५४ ईसवीयेऽनुमानतः।
( ग ) काश्मीरस्य क्षेमेन्द्रः—बोपदेवात् शतवर्षपूर्वम्।
( घ ) चन्द्रकीर्तिः—( १४४५ ईसवीयात् १५५३ ईसवीयपर्यन्तम् )।

एतदतिरिक्तमनेके टीकाकाराः सन्ति, येषां टीकाः सुप्रसिद्धाः सन्ति। ते चेमे सन्ति—माधव-वासुदेवभट्ट-मण्डन-मेघरत्न-दानेश्वर-जगन्नाथ-काशीनाथ-भट्टगोपाल-सहज-कीर्ति-हंसविजयाग्नि-रामभट्टादयः।

अन्यच्च सारस्वतस्य सूत्रेषु रामचन्द्रस्य 'सिद्धान्तचन्द्रिका' टीका विद्यते। अस्यां परम्परायामुणादावप्यनेके ग्रन्थाः सन्ति। सारस्वतस्यैकमेवोद्देश्यमासीत्—'बालानां शीघ्रबोधाय' इति।

**बोपदेवस्तेषां सम्प्रदायश्च**—अन्येषां सम्प्रदायानां तुलनायां बोपदेवस्य व्याकरण-माधुनिकमस्ति। एषां मुग्धबोधोऽस्य सम्प्रदायस्य मुख्यो ग्रन्थो विद्यते। बोपदेवो महाराष्ट्रिय आसीत्। मल्लिनाथेनास्य चर्चा विहिता। विदर्भदेशस्यैते निवासिन आसन्। मुग्धबोधातिरिक्तं कविकल्पद्रुमस्यापि एतैः रचना कृता। अनन्तरञ्च मुक्ताफलं हरिविलासविवरणञ्चापि लिखितम्।

बोपदेवस्योद्देश्यमासीत्—व्याकरणस्य सरलीकरणम्। पाणिनेः व्याख्याकारैः व्याकरणस्य सरलीकरणव्याजेनाधिकं जटिलमेव कृतम्। एभिः व्याकरणस्य सरली-करणाय कातन्त्रस्य साहाय्यं गृहीतम्। एवञ्च दृढीकरणाय पाणिनेः प्रत्याहारसूत्राणा-माश्रय गृहीतः।

पाणिनेः वैदिकीप्रक्रियायां सूत्रमस्ति—'बहुलं छन्दसि', इत्यत्र बोपदेवेन 'बहुलं ब्रह्मणि' इति कथयित्वा सारो गृहीतः। तथा च बोपदेवस्य मुग्धबोधव्याकरणं लोकप्रियमभूत्। अतोऽस्य विषये भट्टोजिदीक्षितेन कथितं यत्—

'बोपदेवमहाग्राह-ग्रस्तो वामन-दिग्गजः ।
कीर्तिदेवप्रसङ्गेन माधवेन विमोचितः' ।।

दीक्षितस्योद्भवात् पूर्वमेव मुग्धबोधस्य प्रचार आसीत् । सप्तदशे शतके चास्य ह्रासः सञ्जातः । मुग्धबोधस्योपरि रामतर्कवागीशस्य टीका विस्तृता शोभना च विद्यते ।

**क्रमदीश्वरस्य जौमार-सम्प्रदायः**—'जौमारनन्दी'महाभागाः अस्य सम्प्रदायस्य प्रवर्तकाः सन्ति । सम्भाव्यते यत् केनाप्यन्येन सम्प्रदायोऽयं प्रवर्तितः, परञ्च जौमारे उदिते सति तन्नाम लुप्तम् । आफ्रेक्टमतेन सम्प्रदायोऽयं बोपदेवात् नवीनो विद्यते । एतच्च भर्तृहरेः महाभाष्यदीपिकाया मार्गमवलम्ब्य लिखितमस्ति । अस्मिन् सम्प्रदाये क्रमदीश्वरस्य नाम महत्त्वाधायकमस्ति । अत्रापि बह्व्यष्टीकाः सन्ति ।

**सुपद्मसम्प्रदायः**—अस्य सम्प्रदायस्य प्रवर्तकः कोऽपि मैथिलब्राह्मण आसीत् । एतदतिरिक्तं 'हरिनामामृतमियाद्यनेके लघुसम्प्रदायाः ग्रन्थाश्च पुरतः समागताः परञ्च तेषां महत्त्वं गौणमासीत् । पश्चात्काले सम्प्रदाया ग्रन्थाश्च पिष्टपेषणमात्रमेव कुर्वन्ति स्म ।

## विभिन्नसम्प्रदायानां धातुपाठ-प्रातिपदिकपाठादि-सम्बन्धित-ग्रन्थानां समीक्षणम्

कौमारसम्प्रदाये ( कातन्त्रव्याकरणे ) दुर्गसिहीयो धातुपाठो विद्यते । अस्य रचना प्राचीनकातन्त्रधातुपाठस्यावलम्बनं विधाय प्रस्तुता विद्यते । तिब्बतप्रदेशे अयं पाठः सार्ववर्मिको धातुपाठः किम्वा कलापधातुसूत्रमिति कथ्यते ।

शर्मण्यदेशीय-विदुषां मतेन—दुर्गसिहकृतः सार्ववर्मिकधातुपाठ एव प्रतिसंस्कृतो भूत्वा परवर्तिकाले दौर्गधातुपाठः दुर्गसिहीयधातुपाठो वाऽभवत् । व्युत्पन्नविदुषां दृष्टावपि आधुनिकदुर्गसिहीयधातुपाठः सार्ववर्मिकधातुपाठस्य प्रतिसंस्कारमात्रमस्ति ।

**बौद्धानां चान्द्रसम्प्रदायः**—पूर्णचन्द्रस्य धातुपाठः दिगम्बरीये जैनसम्प्रदाये शाकटायनीयधातुपाठो विद्यते । तिलकमञ्जर्याः रचयिता धनपालोऽस्य वृत्तिकार आसीत् । देवनन्दिनो धातुपाठोऽद्यत्वे नोपलब्धोऽस्ति । अन्यच्च—क्षीरस्वामिना, कृष्णलीलांशुकेन, सायणाचार्येण च नन्दिनो धातुपाठस्योल्लेखः कृतः । इत्यनेन प्रतीयते यत्—देवनन्दिनोऽपि धातुपाठ आसीत् । सम्भाव्यते यदस्य लेखकः श्रुतपाल आसीत् ।

**रासवतसम्प्रदायः**—अस्य 'जौभरधातुमाला' इति नामकः प्रामाणिको ग्रन्थो विद्यते । पाणिनेः ग्रन्थमाधारीकृत्यास्याः रचना बभूव ।

श्वेताम्बरीये जैनसम्प्रदाये हैमधातुपाठो विद्यते । अयञ्च 'स्वोपज्ञधातुपारायण' इति नाम्ना प्रसिद्धः । पञ्चदशे शतके गुणरत्नसूरिणा अस्य व्याख्या कृता । सारस्वतसम्प्रदाये चन्द्रकीर्तिशिष्यस्य हर्षकीर्तेः धातुपाठो विद्यते । मौग्धसम्प्रदाये बोपदेवकविकल्पद्रुमधातुपाठश्चाथवा धातुकोषो विद्यते । बोपदेवस्य कालः त्रयोदशशतकः । सौपद्मे पद्मनाभस्य धातुकौमुदी वर्तते । धातुनिर्णयेऽस्याः व्याख्या सम्पन्नाऽस्ति । पाणिनीयसम्प्रदाये धातुपाठस्यानेके ग्रन्थाः सन्ति । तद्यथा—भीमाचार्यस्य प्रदीप-

कलिका, क्षीरस्वामिनः क्षीरतरङ्गिणी, मैत्रेयरक्षितस्य धातुप्रदीपः, सायणस्य च माधवीया धातुवृत्तिः अतिशयेन सुप्रसिद्धाः सन्ति । अपि च शब्दकौस्तुभे भट्टोजि-दीक्षिताः कथयन्ति—

'भूवादयो धातवः' । भीमसेनादयो ह्यर्थं निर्दिदिशुरिति स्मर्यते ।
पाणिनिस्तु 'भ्वुध' इत्याद्यवादीदिति भाष्यवार्तिकयोः स्पष्टम्' ॥

'भूवादयो धातवः' इत्यत्र कात्यायनस्य वार्तिकस्य 'परिमाणग्रहणं च' इत्यस्य च व्याख्यां कुर्वन्तः पतञ्जलयः कथयन्ति—'परिमाणग्रहणं च कर्त्तव्यम् । इयानवधि-धातुसंज्ञा भवति इति वक्तव्यम् । 'कुतो ह्येतद्' भूशब्दो धातुसंज्ञा भविष्यति न पुनः 'भ्वुध' शब्द इति अत्र कैयटा आहुः—'ततश्च भ्वुधशब्दाल्लडादिप्रसङ्गः न चार्थपाठः परिच्छेदकः तस्यापाणिनीयत्वात् ।

केषाञ्चिद्विदुषां मते पाणिनिना धातुपाठस्य रचना नैव कृता । धातुपाठे लिखित-मस्ति—टुभ्राजृ तथा भासृ, किञ्च 'अष्टाध्याय्यां सूत्रितमस्ति—'नाग्लोपि शास्वृदि-ताम्', एवञ्च भ्राज् भास् इत्यत्र वार्तिककाराः कथयन्ति—'भ्राजभ्रासोर्ऋदित्-करणं पाणिनीयम्' ।

पाणिनिना धात्वर्थो न कृतः । परञ्च भीमसेनात् पूर्वं धात्वर्थकथनस्य प्रवृत्तिर्नासी-दिति न कथनीयमिति । अर्थकथनस्य प्रवृत्तिस्तु यास्कसमये विद्यमानाऽऽसीत् । धातु-पाठस्येव प्रातिपदिकपाठोऽपि प्रसिद्धो विद्यते । पाणिनिसम्प्रदाये 'पाणिनीयगण-पाठो'ऽस्ति । द्वादशशतकस्य 'गणरत्नमहोदधौ' अस्य व्याख्या सम्पन्ना विद्यते । 'पाणिनीयगणपाठ'नामक एकः संग्रहग्रन्थोऽप्यस्ति । कस्यचिन्मतमस्ति यत्पाणिनिना गणपाठो न निर्मितः । 'पूर्वपरावर……' इति सूत्रस्य भाष्यमस्ति—'अवरादीनां च पुनः सूत्रपाठे ग्रहणमनर्थकम्—किं कारणम् ? गणे पठितत्वात् । गणे ह्येतानि पठचन्ते । कथं पुनः ज्ञायते स पूर्वः पाठोऽयं पुनः पाठ इति । तानि हि पूर्वादीनीमान्यवरादीनि । कैयट-अभियुक्ताः गणान् पठन्ति । अवरकालपाठात् पूर्वशब्दोऽवरशब्देनोच्यते तेन पूर्वः गणपाठः पश्चात् सूत्रपाठ इत्यर्थः । इत्यादीनि पठित्वा केचित् पूर्वादीनि पठितानि ।

सूत्रपाठेन साकं प्रातिपदिकपाठोऽप्यपरिहार्योऽस्ति । अतः सूत्रपाठेन सहैव पाणिनिना प्रतिपदिकपाठस्यापि व्यवस्था कृता भवेत् । पूर्वाचार्याणां प्रातिपदिक-पाठादेभिः सहायताऽवश्यमेव गृहीता स्यात्, परञ्च तस्य संस्कारोऽपि कृतो भवेत् । पाणिनेः पाठस्य परिष्कारः—कात्यायन-पतञ्जलि-वामन-जयादित्यादिभिः समये समये कृतः, नास्त्यत्र सन्देहावसरः ।

कातन्त्रस्य प्रातिपदिकपाठस्य विषये केनापि किमपि न लिखितम्, परञ्च—'स्वरादीनां च' 'मुहादीनां च' 'बाह्वादेश्च विधीयते' 'स्मै सर्वनाम्नः' आदीनि सूत्राण्य-वलोकनेन प्रतीयते यत्—सूत्रपाठेन सह सार्ववर्मिकधातुपाठस्येव सार्ववर्मिकप्राति-पदिकपाठस्यापि प्रचलनमवश्यमेव स्यादिति ।

एषा प्रसिद्धिर्वर्तते यत्—तिब्बते चान्द्रगणपाठः सुरक्षितोऽस्ति । दिगम्बर-सम्प्रदाये शाकटायनीयः गणपाठो विद्यते । स च षोडशपादेषु विभक्तो जैन-सम्प्रदाये

'हैमगणपाठोऽस्ति । सौपद्मे च काशीश्वरप्रणीतः गणपाठः' विद्यते । अन्यान्यसम्प्रदायेषु अभावेऽपि स्वतन्त्रे गणपाठे—सूत्रपाठस्य व्याख्याकाले गणोद्दिष्टाः शब्दसमूहाः प्रायेणोदाहृता भवति ।

लिङ्गानुशासनसम्बन्धितानां ग्रन्थानामपि महत्त्वं न्यूनं नास्ति । केषाञ्चिज्जनानां मतमस्ति यत्—पाणिनिना लिङ्गानुशासनविषयकस्य ग्रन्थस्य रचना न कृताऽऽसीत्—'लिङ्गमशिष्यं लोकाश्रयत्वात्' । अत्र कीथस्य कथनं विद्यते—'लिङ्गानुशासने तथाकथिताः पाणिनिग्रन्थास्तथा प्राचीनाः सन्ति' इति । परञ्च स्वसाम्प्रयिकी परम्परा तु कथयति—

'अष्टकं धातुपाठश्च गणपाठस्तथैव च ।
लिङ्गानुशासनं शिक्षा पाणिनीय अमी क्रमात्' ।।

अत्र पतञ्जलयोऽपि कथयन्ति—'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य तस्मान्न वैयाकरणैः शक्यं लौकिकलिङ्गमास्थातुम् । अशिष्टाम्=अकथनीयम् । लोकाश्रयत्वात्—'लोकसम्मतत्वात्' तथापि लिङ्गानुशासने ग्रन्थास्त्वनेके मिलन्त्येव ।

पाणिनीये लिङ्गानुशासने—दशमे शतके महोत्पलेन, षोडशे शतके प्रक्रियाकौमुदीकारेण रामचन्द्रेण च टीका विरचिता । एतदनन्तरं षोडशे सप्तदशे वा भट्टोजिदीक्षितेन स्ववृत्तिर्लिखिता या शब्दकौस्तुभस्यान्तर्गता विद्यते ।

व्याडिलिङ्गानुशासनसूत्रेण 'द्रव्याभिधानं व्याडिः' इत्यनेन ज्ञायते यत्—व्याडिः कात्यायन-पतञ्जलयोः पूर्ववर्त्त्यासीत् । एतस्य पूर्णं नाम 'दाक्षायण-व्याडि' इत्यासीत् । एषां त्रयो ग्रन्थाः प्राप्यन्ते, ते च—संग्रहः, उत्पलिनी, लिङ्गानुशासनसूत्रञ्चेति । उत्पलिनी कोशो विद्यते, अस्यैव कोशस्यान्तिमे भागे लिङ्गानुशासनमासीत् ।

चान्द्रसम्प्रदायस्य लिङ्गानुशासनसूत्रं 'लिङ्गकारिका' इति नामधेयं प्राप्यं नास्ति । जैनेन्द्रलिङ्गानुशासनं लुप्तमेवास्ति । वामनस्य श्लोके अस्योल्लेखः प्राप्यते । वररुचेरपि लिङ्गानुशासनं प्राप्तं भवति । एषां लिङ्गानुशासनं श्लोकेषु लिखितमस्ति । अपरञ्च कातन्त्रवृत्तिकारस्य दुर्गसिंहस्य नाम्नाऽप्येको लिङ्गानुशासनग्रन्थो विज्ञातोऽस्ति । अनेन प्रकारेणानेकानां लिङ्गानुशासनानां नामानि तु ज्ञायन्ते परञ्च ग्रन्था अप्राप्याः सन्ति । अलमति विस्तरेणेति दिक् ।

## महर्षिः पाणिनिः तत्कृतयश्च

( यथोपलब्धं जीवनवृत्तं तद् रचना च )

सुदीर्घकालात् विदुषां मध्ये भणितिरियं सुप्रसिद्धा वर्तते यत्—'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्' इति । सत्स्वप्यन्येषु व्याकरणेषु पाणिनीयव्याकरणस्यैव कथमियती चर्चा विद्यते । कथमेतज्जातं व्याकरणं लोकप्रियम् । देवताप्रसादात्तु अन्यान्यपि व्याकरणानि प्राप्तानि सन्ति, परञ्चास्यैव व्याकरणस्य सम्पूर्णे भारते एव किमु विदेशेष्वपि सुप्रतिष्ठा विद्यते । माहेश्वराणि चतुर्दश सूत्राण्यादाय विरचितमिदं

व्याकरणं प्राक्तनीं विज्ञानसरणिं प्रदर्शयति। पुरा काले ये ऋषयो महर्षय आचार्याश्चाभवन्, ते स्वकीयं जन्मजातादिकं वृत्तं प्रायो न लिखन्ति स्म न वा ख्यापयन्ति स्म। एतदेव कारणमस्ति यदेषां विषयेऽपर्याप्तज्ञानमस्माकम्। केचिदनुसन्धानप्रवीणाः विद्वांसः सूत्रेषु, वृत्तिषु, भाष्येषु केचिच्चान्यग्रन्थकारोल्लिखितेषु वाक्येषु महामुनेः पाणिनेः नामविषये, कालविषये, निवासस्थानविषये, कर्तृत्वविषये चान्वेषयन्ति। अन्विष्य च यथार्थज्ञानाय प्रयतन्ते। एतेषामाधारमादाय यत्किञ्चिद्विवरणमुपस्थाप्यते।

तत्रादौ नामविषये—आचार्यपुरुषोत्तमदेवविरचिते त्रिकाण्डशेषकोषे वैजयन्तीकोशे च पाणिनेः षड् पर्यायाः समुपलभ्यन्ते, तद्यथा–( १ ) पाणिनः, ( २ ) पाणिनिः, ( ३ ) दाक्षीपुत्रः, ( ४ ) शालङ्किः, ( ५ ) शालातुरीयः, ( ६ ) आहिकश्चेति। तथा च यशस्तिलकचम्पोर्द्वितीयाश्वासे 'पणिपुत्र'शब्दस्य व्यवहारो मिलति।

'पाणिन'नाम्नः प्रयोगः काशिकायां चान्द्रवृत्तौ च समुपलब्धो भवति। 'पाणिनि' इति तु लोकप्रसिद्धं नाम। 'दाक्षीपुत्र' इत्यस्योल्लेखाः महाभाष्ये, समुद्रगुप्तविरचिते कृष्णचरित्रे, पाणिनीयशिक्षायाञ्च प्राप्यते। अपरञ्च 'शालातुरीय' इति नाम्नो निर्देशो ध्रुवसेनस्य द्वितीयस्य ताम्रशासने, भामहस्य काव्यालङ्कारे, जैनेन्द्रविरचितायां काशिकाविवरणपञ्जिकायां, गणरत्नमहोदधौ च समुपलब्धो भवति। परञ्च पाणिनये 'शालङ्कि'-'आहिक'-नाम्नोश्चर्चा कोशातिरिक्त–ग्रन्थेषूल्लेखोऽद्यापि कृते प्रयत्नेऽपि नोपलब्धा भवति।

**पाणिनेः कौलिकपरिचयः**—इत्यस्मिन् विषये यशस्तिलकचम्पौ पाणिनये 'पणिपुत्र'शब्दस्य प्रयोगो मिलति—अतो निश्चीयते यदस्य पितुर्नाम 'पणि' इत्यासीत्। अपि च गोत्रप्रत्ययान्तेन 'पाणिन' युवप्रत्ययान्तेन 'पाणिनि' इति नाम्नाप्यस्यैव समर्थनं भवति। अपरञ्च दिवङ्गतेन महामहोपाध्यायेन पं० शिवदत्तशर्मणा 'शालङ्कि' इति पदस्याधारमवलम्ब्य पाणिनेः पितुर्नाम 'शलङ्क' इति स्वीकृतम्। इदमेव मतं गणरत्नावलीकारस्य यज्ञेश्वरभट्टस्यास्ति। परञ्चान्ये विद्वांसः एतन्मतं समुचितं न मन्यन्ते। यतो हि गणपाठे पठितस्य 'शलङ्कु शलङ्कं च' इति सूत्रानुसारं शालङ्केर्मूलं 'शलङ्कु' इत्यस्ति शलङ्कः न हि। इत्येव न हि कैयटेन प्रदीपे, हरदत्तेन पदमञ्जर्यां, वर्धमानेन चापि गणरत्ने—"शालङ्केर्मूला प्रकृतिः 'शलङ्क' इत्येवानुमोदिता। अन्यच्च 'शालङ्कि' इत्येतद् पदं गणपाठे ( २।४।५९ ) पठितमस्ति तदनुसारमेतत् पदं पिता-पुत्राभ्यां द्वाभ्यामपि प्रयुक्तं भवेत्। महाभाष्ये 'शालङ्केर्यूनश्छात्रा शालङ्काः' इति पाठः समुपलभ्यते। यद्यस्मिन् पाठे शालङ्केः निर्देशः 'पाणिनये' भवेत्तदा तु पाणिनेः पितामहस्य नाम 'शलङ्क' इति भवितव्यम्"। अत्र पण्डितवरेण्यानां युधिष्ठिरमीमांसकमहोदयानां मतमस्ति यत्—पाणिनेः पितुर्नाम 'पणिन्' पितामहस्य च शलङ्क आसीदिति।

**पाणिनेर्मातुर्नाम** – पाणिनिः 'दाक्षीपुत्र' इति नाम्ना निर्दिष्टस्तेन सुस्पष्टं भवति यत्तेषां मातुर्नाम 'दाक्षी' इत्यासीत्। अनेनैव नाम्ना इत्यनुमीयते सम्भाव्यते च यत् पाणिनेर्मातामहस्य नाम दक्षः प्रतीयते।

**कस्तावत् मातुलः**—संग्रहकारस्यैकं नाम 'दाक्षायण' इत्यासीत् । तथा चोक्तं—'शोभना खलु दाक्षायणस्य संग्रहस्य कृतिः । अपरञ्च महाभाष्ये (२।३।६६) काशिकायाञ्चैक(६।२।६९)मुदाहरणमस्ति—'कुमारी दाक्षः' । अत्र दाक्षायणमेव 'दाक्षिः' इति नाम्न्या स्मृताऽस्ति । प्रतीयते यत् पाणिनेः 'पाणिन' 'पाणिनि'श्च गोत्र-युवप्रत्ययान्तत्वाच्च द्वे नामन्यास्ताम् तद्वत् संग्रहकारस्य व्याडेरपि दाक्षि-दाक्षायणश्चेति नामद्वयमासीत् । एतेन पाणिनेर्मातुलः सुप्रसिद्धः संग्रहकारो व्याडिरासीत्, तस्य च 'दाक्षि' 'दाक्षायण' इति नामद्वयमथाप्यासीत् । 'व्याडि' इति पदं क्रौड्यादिगणे पठितमस्ति तदनुसारं व्याडेर्भगिन्याः नाम 'व्याडी' इति भविष्यति । परञ्चान्ये ग्रन्थकाराः संग्रहकारं व्याडिं पाणिनेः मातुलेयः (मातुलपुत्रः) इति स्वीकुर्वन्ति । तदन्ये न मन्यन्ते । ते व्याडेरेव दाक्षि दाक्षायणश्चेति नामद्वयं दाढर्येनोद्घोषयन्ति । अलमत्र विवादेन ।

**पाणिनेः अनुजः**—इत्यस्मिन् विषये ग्रन्थेषूल्लेखा एव प्रमाणम् । तत्र ऋक्सर्वानुक्रमण्याः वृत्तिकारेण षड्गुरुशिष्येण वृत्तौ 'भगवता पिङ्गलेन पाणिन्यनुजेन' इति प्रतिपाद्य तथा च श्लोकबद्धायाः पाणिनीयशिक्षायाः 'शिक्षाप्रकाश'नाम्न्याष्टीकायाः रचयित्रा छन्द-सूत्रकारो पिङ्गलः पाणिनेः अनुज इति प्रख्यापितः ।

**पाणिनेः शिष्याः**—महावैयाकरणस्य व्याकरणप्रणेतुर्महामुनेः पाणिनेः कियन्तः शिष्या आसन् इति गणयितुं न पारयामो वयम् । वस्तुतः द्वौ प्रकारकौ शिष्यौ भवतः । प्रत्यक्षशिष्यः अप्रत्यक्षशिष्यश्च । तत्र तावत् प्रत्यक्षशिष्याणां विषये यत्किञ्चिद् विचारयामः । भगवता महर्षिणा पाणिनिना स्वशास्त्रस्य प्रवचनमनेकवारं स्वशिष्यान् प्रतिकृतमिति महाभाष्याध्ययनेन ज्ञायते । काशिकायाञ्चोदाहरणद्वयं प्राप्यते—'पूर्वपाणिनीयाः' 'अपरपाणिनीयाश्च' । इत्यनेन ज्ञायते यत्—पाणिनेः शिष्यपरम्परा भागद्वये विभक्ताऽऽसीत् । अपरञ्च पाणिनीयसूत्रपाठस्य लघुः वृद्धश्चेति द्वौ पाठौ प्राप्नुतः । अत्र सम्भाव्यते यत्—द्वयोः शिष्यपरम्परयोः सम्बन्धोऽष्टाध्याय्याः द्विविधपाठयोः प्रवचनेन भवेत् । अन्यच्च—महाभाष्यस्य 'उपसेदिवान् कौत्सः पाणिनिम्' इत्युदाहरणेन ज्ञायते यत्—पाणिनेः एकस्य शिष्यस्य नाम आसीत् 'कौत्सः' । संस्कृतवाङ्मये त्वनेके कौत्साश्चर्चिताः सन्ति, तेष्वेको वरतन्तुशिष्योऽप्यासीत् । पाणिनेः शिष्यः कौत्सः कुत्रत्य आसीदित्यधुनापि न ज्ञायते ।

**पाणिनेर्निवासस्थानम्**—एषां देशादिविषये परिज्ञानं तत्तद्ग्रन्थेषु उल्लेखा एव प्रमाणम् । काशिकायाः पैलादिगणे (२।४।५९) 'शालाङ्कि' इति पदस्य स्थितत्वात् सुस्पष्टं भवति यत्—गोत्रमिदं प्राग्देशीयं नास्ति । एतेनानुमानं भवति यत्—प्राग्देशात् भिन्नदेशः एषां निवासस्थानमासीत् । अपरञ्च पाणिनेः 'शालातुरीय'नाम्नः आधारं स्वीकृत्येति कथनीयो भवेद्यत्—पाणिनेः पूर्वजाः शलातुरग्रामस्य निवासिन आसन् । एतत्स्थानं पुरातत्त्वविदां मते—अटकस्योपकण्ठं 'लाहुर' ग्राम एव प्राचीनः 'शलातुरः' विद्यते । अन्यच्च—अष्टाध्याय्याः उदाहरणैः सुस्पष्टं प्रतीयते यत्—पाणिनिः बाहीकदेशस्य लघुस्थानेभ्योऽपि परिचित आसीत् । इत्यने-

नेति तु स्वीकर्तव्य एव भवति यत्––पाणिनिः बाहीकदेशस्याथवा तन्निकटवर्तिनः स्थानस्य निवासी आसीत् ।

**पाणिनेः समयः**— महर्षिः पाणिनिः कस्मिन् समये बभूवेत्यद्यापि ऐतिहासिकैः अनुसन्धानपरायणैर्विद्वत्सु अनेके मतभेदास्तिष्ठन्ति । पाश्चात्यैर्विद्वद्भिर्बहुप्रयासेनेसवीयपूर्वं चतुर्थशतकादारभ्य षष्ठशतकपूर्वमस्य कालः स्वीकृतः । अन्तःसाक्ष्यैर्बहिर्भूतैः साक्ष्यैश्चानेकविधैः प्रमाणैः स्वीये व्याकरणशास्त्रस्येतिहासे पण्डितप्रवराः श्रीमन्तो युधिष्ठिरमीमांसकाः प्रमाणयन्ति यत्––सामान्यतया पाणिनेः कालो वैक्रमाब्दात् २९०० वर्षं पूर्वमासीदिति । एतदेव हि नहि––अस्मिन् विषये विभिन्नानि मतान्युपतिष्ठन्ते । तेषु कानिचित् मतानि यथा––सर्वश्रियः सत्यव्रतसामश्रमिणः २४०० ईसवीयपूर्वम्, गोल्डस्टुकरस्य ७०० ई० पू०, बेलवलकरस्य ७०० ई० पू०, भाण्डारकरस्य ७०० ई० पू०, वासुदेवशरण-अग्रवालस्य ५०० ई० पू०, मैक्डोनलस्य ५०० ई० पू०, मोक्षमूलरस्य ३५० ई० पू०, वेबरस्य ३०० ई० पू० कीथस्य च ३०० ई० पू० । तथाप्यस्य निष्कर्षः यथावदस्ति । विदुषां प्रत्यनोऽद्यापि तिष्ठति ।

**पाणिनेः जीवनवृत्तम्**—अतीव खेदजनकोऽयं विषयो यत् महनीयस्यास्य पाणिनेः जीवनवृत्तमद्याप्यज्ञातमेव । अस्मिन् विषये ग्रन्थानामुद्धरणान्येव शरणम् । महाभाष्यस्य सङ्केतानुसारं पाणिनेः कुलमतीव समृद्धमासीत् ।

तस्यैकमुदाहरणमस्ति––'ओदनं पाणिनीयाः', विद्वांसोऽस्योदाहरणस्याशयं निःसारयन्ति यत्––पाणिनिप्रोक्तस्य व्याकरणस्याध्येतृभ्यश्छात्रेभ्य ओदनस्यापि व्यवस्थाऽऽसीदिति । एतेनास्य समृद्धत्वं सूच्यते । अपि च पाणिनेः मातामहकुलमपि समृद्धमासीत् ।

इत्येव नहि––एतदतिरिक्तं विद्या-वैभवदृष्टचा एतद् कुलद्वयमतीव समृद्धमासीत् । महात्मनो व्याडेः बहुविधं शास्त्रप्रवचनं दूराद्दूरं सुप्रसिद्धमासीत् । तेषां संग्रहग्रन्थाध्येतॄणां विद्वत्सु सविशेषा ख्यातिरासीत् । विद्वांसो ब्राह्मणाः स्वदुहितॄणां विवाहः संग्रहशास्त्रनिष्णातैः युवकैः सह कर्तुं लालायिता भवन्ति स्म । अत एव परवर्तिकालेऽपि सैषा स्थितिः विद्यमानाऽऽसीत् । तथा चाधुनिके काले––

'अचीकमत् यो न जानाति यो न जानाति बर्बरी ।
अजर्घा यो न जानाति तस्मै कन्या न दीयते' ॥

इति कस्यापि विदुषः ।

एतदतिरिक्तं किमपि जीवनवृत्तं नोपलभ्यते । परश्चाश्चर्यविषयोऽयं विद्यते यत्––महिम्ना मण्डितस्य महतो महर्षेः पाणिनेः जीवनस्यान्तिमवृत्तान्तस्य ( घटनायाः ) सङ्केतो न जाने कथं सुरक्षितस्तिष्ठति । तत्र सङ्केतस्थानं यथा पञ्चतन्त्रे समुद्धृतमस्ति––'सिंहो व्याकरणस्य कर्तुरहरत् प्राणान् प्रियान् पाणिनेः' । एतेन ज्ञायते यत्—पाणिनेः प्राणान् सिंहो जहारेति । अत्रैव श्लोके पाणिनेः अनुजस्य पिङ्गलस्य मृत्योरपि वर्णनं विद्यते । तथा च मकरेण समुद्रतटे पिङ्गलो निगलितः । भागिनेय-मातुलयोर्मृत्युर्नितान्तं खेदमावहति । पाणिनीयवैयाकरणेषु इयं किं बदन्ती

विद्यते यत्––पाणिनेः मृत्युः त्रयोदश्यामभूत् । मास-पक्षयोश्चाज्ञानात् प्राचीना वैयाकरणाः प्रतित्रयोदशीमनध्यायत्वेनामनन्ति । त्रयोदश्यां तिथौ पठन-पाठनादिकं वर्जयन्ति ।

**पाणिनिप्रणीता ग्रन्थाः**—अधुना लोकविश्रुतस्य महर्षेर्पाणिनेस्तेषां ग्रन्थानामत्र चर्चा विधीयते याभी रचनाभिस्तेऽमराः सञ्जाताः । तेषां कीर्तिर्विश्वे प्रसृता । तत्रादौ व्याकरणस्य––पाणिनीयव्याकरणस्य सामान्यं नाम 'शब्दानुशासनम'स्ति । अस्मिन् शब्दानुशासने ( काशिकायाम् ) अष्टावध्यायाः सन्ति, तस्मादियं 'काशिका' 'अष्टाध्यायी' इति नाम्न्या सुप्रसिद्धा विद्यते । अपि चाष्टाध्यायेषु विभक्तत्वादियं काशिका 'अष्टक' इत्यपि नाम भजते । प्रत्येकस्मिन् अध्याये चत्वारः पादा भवन्ति । एवं सहस्रचतुष्टयसूत्राणि तत्र सन्ति ।

महर्षिणा पाणिनिना स्वव्याकरणं मुख्यरूपेण लोकभाषायां ( संस्कृते ) लिखितमस्ति । सहैव वैदिकभाषाया नियमानामपि संक्षेपेण निदर्शनं कृतम् । अस्मात् कारणात् व्याकरणमिदं लोक-वेदयोः प्रातिनिध्यं करोति । पाणिनीयव्याकरणस्य सर्वतोऽधिकं वैशिष्टचमस्ति––स्वरप्रकरणम् । उदात्तादिस्वराणां शब्दार्थेन सह घनिष्ठः सम्बन्धो विद्यते । स्वरपरिवर्तनेनार्थे परिवर्तनं जायते । इदानीं काले यद्यपि ( लोकभाषा ) संस्कृतादुदात्तादिस्वराणां लोपोऽभवत्, वैदिकग्रन्थेभ्यश्च स्वरचिह्नानि लुप्तानि, तथापि पाणिनेः स्वरशास्त्रे या सूक्ष्मेक्षिका वर्तते ( स्वरे विशेषः महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य––काशिकायाम् ४।२।७४ ), तेन ज्ञायते यत्––तस्मिन् काले उदात्तादि स्वराः व्यवहार्या आसन् । सामान्यजना अपि––उदाहरणे स्वराणां परिचयं रक्षन्ति स्म । तथा हि––व्यासनद्याः दक्षिणे तटे दत्तनिर्मितेभ्यः कूपेभ्य 'अन्तोदात्त'शब्दस्य प्रयोगो भवति स्म । उत्तरीयतटस्य च कूपेभ्यः 'आद्युदात्त'-शब्दस्य प्रयोग उपलभ्यते । एवञ्च यदि पाणिनिः उत्तरवर्तिनां वैयाकरणानामिव स्वरशास्त्रस्योपेक्षां कुर्यात्तदा तस्य व्याकरणस्य न्यूनातिन्यूनश्चतुर्थांशो भागो लघुत्वेन स्यात् । अन्यच्च लोकभाषायां स्वराणामव्यवहारेऽपि वैदिकग्रन्थेषु अस्य शास्त्रस्य महती उपयोगिता विद्यते ।

**अष्टाध्यायी**—महामुनेः पाणिनेः अयमेको तादृशो ग्रन्थो विद्यते, येनास्य ख्यातिः सर्वत्र प्रसृता वर्तते । अपरञ्चाष्टाध्याय्याः सूत्रपाठस्य पौर्वापर्यमियत् सुसम्बद्धमस्ति यत्—तेषु सूत्रेषु कान्यपि सूत्राणि इतस्ततो परिवर्तने कृते सति ग्रन्थकारस्य समस्तं प्रयोजनमेव नष्टं भवति । तत्र पाणिनिना अनुवृत्तेः पौर्वापर्यक्रमस्य च विषये सविशेषं ध्यानं प्रदत्तम् । अनुवृत्तेः सूत्रक्रमेण सम्बन्धत्वात् अध्येतारं वृत्त्यनुपाठस्यावश्यकता न भवति । कार्यदृष्टचाऽपि पौर्वापर्यस्य दृढः सम्बन्धो विद्यते । 'विप्रतिषेधे परं कार्यम्' 'पूर्वत्रासिद्धम्' इत्यनयोर्नियमाः सूत्रपाठे किञ्चिदपि परिवर्तने कृते सति विरोधा उपस्थिता भवन्ति । सत्यपि काठिन्ये पाणिनीयवैयाकरणाः सिद्धान्तकौमुद्यादि प्रक्रिया-ग्रन्थानामाधारमाधृत्य व्याकरणास्याध्ययनाध्यापनादिकं कथं कुर्वन्तीति न जाने ।

पाणिनिना स्वशब्दानुशासनस्य परिशिष्टरूपाणि––'धातुपाठः', 'गणपाठः', 'उणादिसूत्रम्', 'लिङ्गानुशासनम्' इत्येतानि चतुःसंख्यकानि पुस्तकानि च विरचि-

तानि। केचन विद्वांसः 'उणादि'ग्रन्थं शाकटायनस्य कृतिमामनन्ति। उणादिसूत्राणां द्वौ प्राचीनौ पाठौ स्तः। तत्र प्रथमः पञ्चपादी पाठः, द्वितीयश्च दशपादी पाठः। अन्यच्च पाणिनिना स्वाष्टाध्याय्याः वृत्तेरपि प्रवचनं कृतम्। एतच्च बहुभिः प्रमाणैः व्याकरणशास्त्रस्येतिहासे विद्वद्वरेण याज्ञिकेन संसाधितमिति।

**पाणिनीयशिक्षा**—'शिक्षा' वेदाङ्गस्य प्रथममङ्गम्। अस्याञ्च वर्णानां यथाविहितमुच्चारणं कथं कर्त्तव्यमित्यस्य विषयस्य सूक्ष्मरूपा विवेचना विद्यते। अस्मिन् समये पाणिनि-नाम्न्या एका श्लोकबद्धा शिक्षा प्रचलिता विद्यते।

एतस्याः शिक्षायाः पाठद्वयमुपलभ्यते। एकस्मिन् त्रिंशत् श्लोकाः सन्ति, द्वितीये च षष्टिपरिमिताः। शिक्षाप्रकाशनाम्न्याष्टीकाया रचयितुर्मते श्लोकबद्धायाः शिक्षाया रचना पाणिनेः अनुजेन पिङ्गलेन कृताऽऽसीत्। अस्याः श्लोकबद्धायाः शिक्षायाः प्रथमश्लोकेन विदितो भवति यत्—पाणिनिना शिक्षाग्रन्थोऽवश्यमेव विरचितो भवेत्। तस्यैवाधारेऽस्य ग्रन्थस्य रचना बभूवेति। श्लोकबद्धायाः शिक्षायाः समधिकप्रसारत्वात् मूलरूपा पाणिनीयशिक्षा लुप्तप्रायाऽभूत्। अपरञ्च पाणिनेः मूलशिक्षाग्रन्थस्योद्धारस्य श्रेयः स्वामिनं दयादन्दसरस्वतीं विद्यते। महता प्रयत्नेन तैः १८७९ ईसवीये वर्षेऽस्य शिक्षाग्रन्थस्यैको हस्तलेखः सम्प्राप्तः, १८८० ईसवीये च हिन्दीभाषाव्याख्यया सह प्रकाशितश्च। इयं शिक्षा श्लोकबद्धा विद्यते। अस्यामष्ट प्रकरणानि सन्ति।

**जाम्बवती-विजयः**—'आदौ व्याकरणं काव्यमनुजाम्बवतीजयम्' इत्यनेन जाम्बवतीविजयस्य ख्यापनं सिद्ध्यति। महाभाष्यकारेण पतञ्जलिना 'व्याकरणस्य' लक्षणं कुर्वता लिखितं यत्—'लक्ष्यलक्षणे व्याकरणम्'। अतो यत्र पाणिनिना शब्दानां लक्षणेभ्यः 'अष्टाध्यायी' विरचिता, तत्र तेषां लक्षणानां लक्ष्यानां परिज्ञानाय जाम्बवतीविजयकाव्यस्यापि रचना कृता। अस्मिन् काव्ये श्रीकृष्णस्य पाताले प्रविश्य जाम्बवत्याः विजयस्य परिणयस्य च कथा वर्णिता विद्यते। अतोऽस्यापरं नाम पातालविजयोऽप्यस्ति। अस्यानेके श्लोकाः श्लोकांशो वा विविधग्रन्थेषूद्धृताः सन्ति। एभिरुद्धरणैर्ज्ञायते यदस्मिन् महाकाव्ये न्यूनातिन्यूना अष्टादश सर्गाः अवश्यमेवासन्। अस्मिन् विषये डॉक्टर पीटर्सनप्रभृतयः पाश्चात्यविद्वांसस्तदनुगामिनश्च भण्डारकरादयो भारतीया विद्वांसोऽपि अस्य काव्यस्य लालित्यपूर्णां सरसां रचनामवलोक्य कथयन्ति यत्—एतत् काव्यं सूत्रकारस्य पाणिनेः रचना नैव भवितुमर्हति। यतो हि—शुष्कानां कर्णकटुत्वदोषयुक्तानां सूत्राणां रचयिता जनः एतादृशो लालित्यपूर्णः सरसश्च ग्रन्थः कथङ्कारं निर्मापयेत्? पाश्चात्यानामियं कल्पना सर्वथा प्रमाणशून्या विद्यते। अन्यच्च—एकस्यैव विद्वज्जनस्य विभिन्नविषयाणां रचनासु भाषाभेदोऽवश्यमेव भवति। प्रत्यक्षमिदं दृश्यते। अतो भाषाभेदसदृशस्य बलहीनस्य स्वकल्पितस्य मिथ्या निकषस्याधारे आधृतं पाश्चात्यमतं सर्वथा हेयं गर्हणीयञ्च भवति। भारतीये संस्कृतवाङ्मये जाम्बवतीविजयं निःसन्दिग्धरूपेण सूत्रकारस्य पाणिनेरेव रचना स्वीकृता विद्यते। किम्बहुना—स्वयं महाभाष्यकारेण पतञ्जलिना महाभाष्ये पाणिनिः कवित्वेन चर्चितः। इत्येव नहि—ऐतिहासिकविदुषा राजशेखरेण,

श्रीधरेण, क्षेमेन्द्रेण, शरणदेवेन च सूत्रकारः पाणिनिः एव महाकाव्यस्य रचयिता प्रख्यापित । महाराजसमुद्रगुप्तविरचिते श्रीकृष्णचरित्रे यद्यपि ग्रन्थस्य खण्डितत्वात् पाणिनेः वर्णनस्यांशो नष्टस्तथापि मुनेः कात्यायनस्य महाकवेर्माघस्य च प्रकरणे पाणिनेः काव्यकारस्य निर्देशः समुपलभ्यते । एभिः प्रमाणैश्चिन्त्याः खलु वैदेशिका विद्वांसः । इत्यलं पल्लवितेन ।

**द्विरूपकोषः**—लन्दनस्थितस्य 'इण्डिया आफिस'स्य पुस्तकालये ७८९० संख्यकस्यैको कोषग्रन्थोऽस्ति । अस्मिन् केवलं ६ पत्राणि सन्ति । ग्रन्थस्यान्ते लिखितमस्ति—इति पाणिनिमुनिना कृतं द्विरूपकोशं सम्पूर्णमिति । अयं कोषः सूत्रकारस्य पाणिने कृतिर्विद्यतेऽन्यस्य वा' इति अज्ञातमस्ति ।

**पूर्वपाणिनीयम्**—एतन्नाम्नः एकः २४ सूत्रात्मको ग्रन्थः कतिपयवर्षपूर्वं सौराष्ट्रात् ( काठियावाड ) प्रकाशितो विद्यते । अस्यानुसन्धाता सम्पादकश्च श्री पं० जीवाराम वैद्यः वर्तते । एष ग्रन्थस्तेन पाणिनिकृतसिद्धचर्थमनेकानि कारणान्युपन्यस्तानि परञ्च तानि सर्वाणि कल्पना प्रसूतानि सन्ति ।

## कात्यापरपर्यायः कात्यायनः

व्याकरणशास्त्रविदुषां समवाये पाणिनीयव्याकरणस्य महन्महत्त्वं विद्यते । तत्र पाणिनि-कात्यायन-पतञ्जलीनां त्रयाणां मुनीनामुच्चैः स्थानमस्ति । इमे मुनयः व्याकरणस्य विशिष्टा व्याख्यातारः सन्ति । तत्रापि पाणिनिस्त्वस्य व्याकरणस्य प्रवर्तक एव । परवर्तिवैयाकरणा एतान् प्रणम्यैव ग्रन्थरचनां कुर्वन्ति । यथा—सिद्धान्तकौमुद्याः रचयित्रा श्रीमता भट्टोजिदीक्षितेन कौमुद्याः मङ्गलाचरणावसरे प्रणमितं मुनित्रयम् । तद्यथा—

मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च ।
वैयाकरणसिद्धान्तकौमुदीयं विरच्यते ॥

एतेन सिद्धयति यत्—एते मुनयः क्रमेण प्रमाणभूताः सन्ति—'यथोत्तरं मुनीनां प्रामाण्यमिति दिशा । एषां त्रयाणां मुनीनां मध्ये कात्यायनो मध्यमस्थानीयः । वृत्तिरचनायामस्य वृत्तिकारस्य कात्यायनस्य यथा प्रसिद्धिस्तथाऽन्येषां न । अत्रैतदपि ध्यातव्यं यत्—सुप्रसिद्धे महाभाष्ये पतञ्जलिना कात्यायनकृतवार्तिकानामेवविशेषतो व्याख्यानं कृतम् । अस्य महामुनेः अनेकानि नामान्युपलभ्यन्ते । तत्र पुरुषोत्तमदेवेन स्वकीये 'त्रिकाण्डशेषे' कोशग्रन्थे पञ्च नामानि निर्दिष्टानि, तद्यथा—कात्यः, कात्यायनः, पुनर्वसुः, मेधाजित्, वररुचिश्चेति । अत्र तन्निर्दिष्टानां नाम्नां यथाक्रमं विवरणमुपस्थाप्यते—

**कात्यः**—गोत्रप्रत्ययान्तमिदं नाम विद्यते । एतच्च पतञ्जलिना स्वमहाभाष्ये वार्तिककाररूपेण निर्दिष्टम् । तच्च यथा—'प्रोवाच भगवान् कात्यस्तेनासिद्धिर्यणस्तु ते' अत्र 'कात्य'नाम्नैव कात्यायनस्य ग्रहणम् । अपरञ्च बोधायनश्रौतसूत्रेऽप्येतन्नामसमुपलभ्यते ।

**कात्यायनः**—यथा पूर्वमेव प्रतिपादितं यत् कात्य एव कात्यायन इति। एतद्विषये विदुषां मतमस्ति यत्—गोत्रप्रत्ययान्तमिदं नाम विद्यते। अस्य नाम्नः संसाधनं भवति—'जीवति तु वंशे युवा' इति पाणिनिसूत्रेण वंशे पिता-पितामहादौ जीवति सति पौत्रादेर्यदपत्यं तस्य 'युवसंज्ञा' भवति। तथा च 'वृद्धस्य च पूजायाम्' इत्यनेन वार्तिकेन पूजायामित्यस्मिन् अर्थे गोत्रापत्यस्यैव युवसंज्ञा जायते, तेन—कतस्य युवापत्यं=कात्यायन इति सिद्धयति। अस्योद्धरणं महाभाष्ये (३।२।११८)—'न स्म पुराऽनद्यतन इति ब्रुवता कात्यायनेनाह' इति।

**पुनर्वसुः**—यद्यप्यस्य नाम्नः प्रामाणिकी स्थितिर्नोपलभ्यते तथापि प्राप्तसङ्केतानुसारेण यत्किञ्चिदुपस्थाप्यते। पुनर्वसुरित्यस्माज्जातः पुनर्वसुः। भाषावृत्तावस्योल्लेखो यथा—'पुनर्वसुर्वररुचिः' इत्येव प्राप्यते। यत्तु महाभाष्ये 'पुनर्वसू च माणवकौ' इत्युपलभ्यते तत्तु कात्यायनं न स्वीकरोति।

**मेधाजित्**—कात्यायनस्य अस्य पर्यायस्य त्रिकाण्डशेषे कोषे एव नाम्ना दृग्गोचरीभवति नान्यत्र।

**वररुचिः**—कात्यायनस्यास्य नाम्नश्चर्चा बहुत्र विद्यते। तत्र महाभाष्ये पतञ्जलिना वाररुचकाव्यस्य चर्चा कृता। वाररुचेः काव्यस्यापरं नाम स्वर्गारोहणकाव्यमिति। महाराजेन समुद्रगुप्तेन कृष्णचरिते स्वर्गारोहणकाव्यस्य रचयिता वररुचिरिति स्वीकृतः। सोऽयं वररुचिः कात्यायन एव। तद्यथा अस्योल्लेखः कृष्णचरिते—

'यः स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि।
काव्येन रुचिरेणैव ख्यातो वररुचिः कविः'॥

अपरञ्च—

'न केवलं व्याकरणं पुपोष दाक्षीसुतस्येरितवार्तिकैर्यः।
काव्येऽपि भूयोऽनुचकार तं वै कात्यायनोऽसौ कविकर्मदक्षः'॥

अन्यच्च—अस्मिन् विषये ख्यातिप्राप्ताः मोक्षमूलर (मैक्समूलर) महोदयाः प्राकृतप्रकाशकारं वररुचिं कात्यायनञ्चैकमेव स्वीकुर्वन्ति। लन्दनस्थिते 'इण्डिया हाउस पुस्तकालये' स्थितायां सर्वानुक्रमण्यां 'अत्र शौनकादिमतसंग्रहीतुर्वररुचेरनुक्रमणिका' इत्यनेन पाठेन ते भ्रान्ताः। एवञ्च मेदिनीकोशे उक्तमस्ति 'कात्यायनो वररुचौ विशेषे च मुनेः पुमान्' एतेन प्रमाणितो भवति यत्—द्वावप्येक एवेति निश्चितम्। अत्रानेकविधाः किंवदन्त्यः प्रसिद्धाः सन्ति; केचिद्वदन्ति—वररुचिः वासवदत्ताप्रणेतुः सुबन्धोर्मातुलोऽयम्। केचिच्च विश्वसन्ति यत् वररुचिः हर्षविक्रमादित्यस्य समकालिक आसीत्। परञ्च पाणिनि-सूत्राणां वार्तिककाराः पूर्वोक्तकात्यायनाद्भिन्नाः प्रतीयन्ते। एतदेव हि नहि कदाचित् केऽपि कथयन्ति यत्—कात्यायनः भाष्यकारस्य पतञ्जलेः समकालिक आसीत्। केचन द्वयोर्भेदमामनन्ति, कथयन्ति च—कात्यायनः वररुचेः आचार्यः। मतद्वयमिदमस्वीकार्यमस्ति। कात्यायनस्य विषये एतत्तु कथनीयमेव यत्—अयं पाणिनेः पश्चात् पतञ्जलेश्च पूर्वमेवासीत्। श्रूयतेऽनुमीयते च यत्—कात्यायननामकः कश्चिदेको जनः भगवतः बुद्धस्य शिष्यो-

ऽप्यासीत्, परञ्चाश्चर्यस्य विषयोऽयं यत्—ख्यातनाम्ना वैदिकऋषिणा कात्यायनेन सह अस्य बुद्धशिष्यस्य कात्यायनस्य कः सम्पर्को भविष्यति । तेजस्तिमिरयोः सामानाधिकरण्यं कुतः । कात्यायनेन मुनिना पाणिनेः व्याकरणस्यातिरिक्तं शुक्लयजुर्वेदसंहिताया माध्यन्दिनप्रातिशाख्यस्य सर्वानुक्रमण्याः वैदिककल्पसूत्रस्य च रचना कृता । गोल्डस्टूकरस्य कथनमस्ति यदेतैः माध्यन्दिनप्रातिशाख्यानन्तरं पाणिनेः सूत्राणामुपरि वार्तिकस्य रचना कृताऽऽसीत् ।

गोल्डस्टूकर-वेबराभ्यां द्वाभ्यामपि कात्यायनः पूर्वदेशीय इति प्रतिपादितः । परञ्च विद्वन्मूर्द्धन्याः समीक्षकाः रामकृष्णगोपालभण्डारकरमहोदयाः महाभाष्यस्य वाक्यमेकमुद्धृत्य कथयन्ति यत्—नहि कात्यायनः पूर्वदेशीयः, अपि तु दाक्षिणात्य आसीत् । कात्यायनस्य वार्तिकमेकमस्ति—'यथा लौकिकवैदिकेषु' । एतल्लक्ष्यीकृत्य पतञ्जलिः कथयति—'प्रियतद्धिता हि दाक्षिणात्याः, यथा लोके वेदे च प्रयोक्तव्ये वैदिकेष्विति प्रयुञ्जते' । एतेन प्रमाणितो भवति यत्—कात्यायनो दाक्षिणात्य एवासीत् । इत्यलं वररुचेः कात्यायनस्य विचारप्रसङ्गे । तथा च पूर्वोक्तयोस्तृतीयचतुर्थयोः 'पुनर्वसु-मेधाजित्' इत्यनयोर्नाम्नोः सम्बन्धे विदुषां मध्ये मतभेदस्तिष्ठति । तेषां मते—एतस्माद्भिन्नोऽयं कात्यायन इति ।

## महाभाष्यप्रणेता पतञ्जलिः

निखिलविद्यानिष्णातस्य शेषावतारस्य महाभाष्यकारस्य पतञ्जलेर्विषये तथा सर्वाङ्गीणमितिवृत्तं नोपलभ्यते यथा विदुषामपेक्षा विद्यते । अत्रापि समीक्षकाणां विदुषां भणितिरेव प्रमाणम् । अस्य महात्मनो महनीयकीर्तेः पतञ्जलेः योगविद्यायां शब्दशास्त्रे आयुर्वेदशास्त्रे च महत्त्वपूर्णा रचनामवलोक्य यथार्थसमीक्षकेण केनचिद्विदुषा पद्यमेकं विरचितं तच्च यथा—

योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन ।
योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥

अस्य पद्यस्य प्रामाणिकता विषये केचन विद्वांसः सहमताः न सन्ति । परञ्चास्य प्रामाणिकता विषये विचार एव न समुचितः । अस्मिन् पद्ये पद्यकारस्य भावना द्रष्टव्या । अस्मिन् पद्ये तु केवलं महामुनेः पतञ्जलेः तत्तत् शास्त्रेषु प्रवीणतायाः, तं प्रतिश्रद्धायाश्च वर्णनं विद्यते । इति तु सुविदितमस्ति विदुषां समवाये यत्—पतञ्जलिः योगशास्त्रेऽपि पारङ्गम आसीत् । अस्य पातञ्जलयोगदर्शनं सुप्रसिद्धमेव । व्याकरणशास्त्रे महाभाष्यस्य रचनां विधाय देशे-विदेशेष्वपि परां ख्यातिमधिगतवान् । एतेन महता शुष्कमत एव नीरसं कठिनं दुरवगाहमपि व्याकरणशास्त्रं सरसया वाण्या लिखितेन भाष्येण नीरसं वाक्सूत्रं रसाप्लुतमकरोत् । अहो ! वाण्याः विलासे रसोद्भूतिपरम्परावाग्देवताप्रसादादेव भवति । अस्य भाष्यस्य तथा प्रचारः प्रसारोऽभवत् यदध्ययनं कृत्वा समस्ते विश्वस्मिन् विद्वांसश्च मत्कृता अभवन् । किम्बहुना महाभाष्येति शब्दोच्चारणेनैव पातञ्जलमहाभाष्यस्यावबोधो जायते । महाभाष्यमिदं सर्वेषु पाणिनीयसूत्रेषु नोपलभ्यते । अध्ययनाध्यापनक्रमे विद्वांसः स्वच्छात्रान् उद्बोधयन्ति यत्—

पुराकाले भोजपत्रेषु, तालपत्रेषु किंवा पिप्पलादिपत्रेषु ग्रन्थलेखनपरिपाटी आसीत्, महाभाष्यमपि प्रायः पिप्पलपत्रेषु लिखितमासीत्। कदाचिद् दैवयोगेन भगवतः पतञ्जलेः आश्रमे अजः अजा वा तत्र समागत्य भाष्यलिखितानि पत्राणि तेन तया वा भक्षितानि तदारभ्यैषा जनश्रुतिः सञ्जाता यत्—महाभाष्यमजभक्षितमिति। सूत्राणामुपरि अनुपलब्धभाष्यस्य एतदेव।

**महामुनेः पतञ्जलेः कालः**—यस्मिन् महाभाष्ये भारतीयसंस्कृतेः संस्कृतशास्त्राणाञ्च प्रतिच्छाया पदे पदे दर्पणे दृश्यमिव प्रतिभाति, तत्प्रणेतुर्विषये एव विदुषां मध्ये कर्षणापकर्षणभावाः स्फुरन्ति। तेनैकमत्यं धारयन्ति। अस्मिन् विषये विद्वद्वरेण्याः अनुसन्धानजगति प्रवीणाः महामान्या युधिष्ठिरमीमांसकाः सादरं स्मर्यन्ते। तैः महता प्रयत्नेन, विभिन्नमतान्यालोच्य यन्मतं सुनिश्चितं तदेवादरणीयमस्माकम्। एतन्मतञ्च यथा—'चन्द्रगोमिद्वारा परिष्कृतवर्तमानपाठमाधारीकृत्य महाभाष्यकारस्य पतञ्जलेः कालनिर्धारणं सर्वथाऽन्याय्यम्'। यदि मदीयप्रदर्शितः २००० वि० पू० कालः कथञ्चित् विद्वद्भ्यो न रोचते चेत् तथापि अमुष्यकालो विक्रमपूर्वतः १२०० वर्षाद् उत्तरकालिकः कथमपि नैव सम्भवति' इति।

**किं नाम भाष्यत्वम्—महाभाष्यत्वं च कथम्**—सुविदितमस्ति तत्रभवतां विदुषां मध्ये यन्महामुने पाणिनेः सूत्राणामुपरि मुनिसत्तमस्य कात्यायनस्य वार्तिकपाठाः सन्ति। ये साम्प्रतं स्वातन्त्र्येण नोपलभ्यन्ते। एनमेवाश्रित्य महर्षिणा पतञ्जलिना भाष्यरचना कृता। किमिदं भाष्यमिति जिज्ञासायाम्—सहसा विष्णुधर्मोत्तरे दृष्टिपातो जायते। तस्य तृतीये खण्डे चतुर्थाध्याये भाष्यस्य सुस्पष्टं लक्षणं विद्यते। तद्यथा—

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

**अत्रायमाशयो यत्**—सूत्रानुसारिभिः वाक्यैरित्यनेन वार्तिकसम्बन्धिभिर्वचनैरिति भावस्तेन पाणिनिसूत्राणामुपरि कात्यायनवार्तिकवाक्यैरिति यत्र=यस्मिन् स्थले सूत्रार्थः विशदं व्याख्यानं भवति, अपि च स्वपदानि=स्ववाक्यानि यत्र वर्ण्यन्ते तत्र भाष्यत्वं भवति। महच्छब्दयोजनेन चेति सूच्यते यत् पूर्वमपि किमपि भाष्यमासीत् तस्मादपि श्रेष्ठतरं यतो हि पतञ्जलेः पूर्वमप्यनेके व्याख्यातारो वार्तिकस्याभूवन्। ते चेमे सन्ति—हेलाराजः राघवसूरिः राजरुद्रप्रभृतयः।

**जन्मभूमि-वंशादि परिचयः**—एतयोर्विषये परोक्तिरेव प्रमाणम्। सुप्रसिद्धेन समीक्षकेण वैयाकरणेन श्रीमता नागेशेन पतञ्जलेर्मातुर्नाम 'गोणिका' इति ख्यापितं तथा चोक्तम्—'गोणिकापुत्रो भाष्यकार' इति। विदुषां मध्ये इयं किंवदन्ती विद्यते यत्—पतञ्जलेर्जन्मभूमिः गोनर्ददेशोऽस्ति। पतञ्जलेरेकमपरं नाम 'गोनर्दीय' इत्यपि कथ्यते। अयं गोनर्ददेशः कुत्रास्ति इत्यपि अनुसन्धेय एव। भण्डारकरमहोदयाः एतत्स्थानं 'गोण्डा' इत्यामनन्ति। प्राकृतव्याकरणानुसारं 'र्द' इत्यस्य स्थाने 'ड्ड' अथवा 'ड्ड' इति भवत्यतो गोनर्दात्—गोनड्ड इत्युच्चरतिस्म। एतद् विपरीतं कनिंघमस्य स्वभूगोले कथनमस्ति—गोण्डा इति संस्कृत—गौडाद्भूतोऽस्ति। अत्र

विशेषेण सम्भाव्यते यत्—संस्कृतगोनर्दशब्दादेव गोण्डा इत्यभवत्। पतञ्जलिस्तत्रत्यैव निवासी आसीत्। काशिकायाः १।१।७५ सूत्रे वृत्तौ च गोनर्दीय, भोजकटीयादयः कतिपयशब्दा उदाहरणत्वेन व्याख्याताः सन्ति। इमे गोनर्दीयाः प्राच्यदेशवासिनः सन्ति तथा च पतञ्जलिः गोनर्दीयः कथितः अतोऽसौ प्राच्यवैयाकरण आसीदिति। अपरञ्च कैयटेनानेकत्र पतञ्जलिः आचार्यदेशीयः कथितः। गोल्डस्टुकर-वेबरयोर्मते आचार्यदेशीयस्यार्थः आचार्यदेशस्थो जनः, आचार्यश्चायं कात्यायनस्य निर्देशवाचकः। पतञ्जलयः प्राच्यदेशीयाः आसन् अतोऽस्य सिद्धान्तस्यानुसारं कात्यायनोऽपि तद्देशीयसम्भूतो भविष्यति। अत्रेति तु पूर्वमेव सुनिश्चितं यत् कात्यायनः दाक्षिणात्य इति। अत गोल्डस्टुकरस्य मतं चिन्त्यम्। अन्यच्च—पतञ्जलेर्विषये प्रसिद्धिरियं वर्तते यत्—इमे किञ्चित्कालपर्यन्तं काश्मीरे वसन्ति स्म। महाभाष्यातिरिक्तं तेषां पाणिनिव्याकरणेऽनेकानि वार्तिकान्यपि सन्ति, येषां संज्ञा 'इष्टि' रित्यभिधीयते।

अपरञ्च पतञ्जलिना स्वमहाभाष्ये व्युत्पन्नविचारनैपुण्यस्य परिचयः प्रदत्तः। कात्यायनकृतायाः पाणिनिसमालोचनायाः वैधतानिरूपणार्थमेव महाभाष्यस्य रचना कृता। सत्यां पाणिनेरष्टाध्याय्याम्, सति च कात्यायनस्य वार्तिके व्याकरणस्य याऽङ्गहीनताऽऽसीत्, पतञ्जलिना स्वमहाभाष्यस्य रचनया तत्पूरिता। वस्तुतः पातञ्जलमहाभाष्यपर्यन्तं विवरणं प्राप्यैव संस्कृतव्याकरणं स्वचरमसीमासीमायामासीत्।

कैयटेन महाभाष्यस्योपरि एका टीका विरचिता, यस्याः नाम 'भाष्यप्रदीप' इत्यस्ति। तदनन्तरं नागोजीभट्टेन 'प्रदीपोद्योत'नाम्नी टीका भाष्यप्रदीपे लिखिता। तदनु टीकायाः शृङ्खला समुदिता। भर्तृहरिकृते वाक्यपदीयनामके भाष्ये एका टीका विद्यते। एतदतिरिक्तं 'कारिका' नाम्न्या एका छन्दोमयी रचना दृष्टिगोचरा भवति। वाक्यपदीयस्य द्वितीये काण्डे लिखितमस्ति यत्—पतञ्जलिना व्याडिप्रणीतं संग्रहं विलुप्तप्रायं दृष्ट्वा 'सवार्तिकस्य पाणिनीयभाष्यस्य' रचना कृता।

## मुख्यार्थबोधकः स्फोटवादः

वेदान्तिनां मते यथा 'ब्रह्मसत्यं जगन्मिथ्या' इति घोषणया जगतः मिथ्यात्वं सिद्ध्यति तद्वत्—वैयाकरणविदुषां मते शब्दोऽपि समुत्पत्त्यनन्तरं विनाशशीलो भवति। परञ्चात्र स्फोटेन शब्दानामर्थज्ञानं जायते। किम्भूतोऽयं स्फोटः इति जिज्ञासायां विद्वांसः कथयन्ति यत्—वर्णस्य, पदस्य, वाक्यस्य वा सुस्पष्टार्थो यस्य साहाय्येन स्फुटितो भवति, प्रकाशितो भवति स एव स्फोटः। अपरञ्च—अर्थज्ञानस्योपयुक्तं शक्तिशालिनं पदार्थविशेषमेव स्फोटमिति कथयन्ति, तथा च येनार्थबोधे वर्णस्य साहाय्यं भवति तं वर्णस्फोटः, येन पदार्थबोधे उपयुक्तता भवति तं पदस्फोटः, येन च वाक्यस्यार्थबोधने क्षमता भवति तं वाक्यस्फोट इति कथ्यते। एतदेव स्फोटगतं पार्थक्यमस्ति। वर्णानां समूह एव पदं भवति तथा च 'सुप्तिङन्तं पदम्' इति व्याहरन्ति वैयाकरणाः। एवञ्च पदानां समूहो वाक्यं भवति। वर्णाः पदानि च क्षण-

मात्रं तिष्ठन्ति । अतोऽनेकवर्णानां पदानां वा एकस्मिन् समये समावेशो न भविष्यति । एतादृशस्य समावेशस्याभावे पदस्य वाक्यस्य वा सङ्गठनं न भवितुमर्हति । परिणामतः पदार्थज्ञानं वाक्यार्थस्य शाब्दज्ञानमपि न सम्भवमस्ति । वाक्यपदीये भर्तृहरेः सुस्पष्टं मतमस्ति यत् विश्वे तादृशं किमपि ज्ञानं नास्ति यत् शब्दसम्पर्केण विना तस्य जनिर्भवेत् । अतः ज्ञानमेव शब्देन सह ग्रथितं भवति । अस्यामवस्थायामर्थबोधस्यानुकूलं स्फोटनामकमेकं पदार्थमवश्यमेव स्वीकरणीयमिति ।

वर्णस्फोटस्य विषये माधवाचार्यस्य मतमस्ति यत्—यो हि वर्णैरभिव्यक्तो भवेत् स एव वर्णस्फोटः । अपरञ्च वर्णसमूहस्य वाचकत्वेऽसम्भवे सति यस्याः शक्तेः साहाय्येनार्थबोध उत्पद्यते स एव स्फोटः । तथोक्तः स्फोटः वर्णेनैव व्यक्तो भवति । अत एव विद्वांसः स्फोटमर्थप्रतीतिजनकं नित्यं शब्दविषयकमामनन्ति । अत्र शब्दो द्विधा—नित्यशब्दः, अनित्यशब्दश्च । स्फोटरूपः शब्दः नित्यः प्रकृतो वा भवति । वर्णरूपः शब्दश्चानित्यो वैकृतो वा भवति ।

स्फोटवादिनां मतं पूर्वपक्षरूपे संस्थाप्य वर्णवादिनः ( यस्य मते वर्णादेवार्थबोधो भवति स्फोटस्य काऽऽवश्यकता ) कथयन्ति यत्—यदि वर्णसमूहा एव एकमात्रं ज्ञानगम्यविषयत्वात्—अर्थबोधमुत्पादयन्ति तदा 'नव'शब्दात् वनशब्दस्यार्थः कथं न प्रकाशितो भवति । अस्योत्तरं प्रयच्छन्तः शारीरिकभाष्यकाराः श्रीमदाद्यशङ्कराचार्याः कथयन्ति—'शब्द इति चेन्नातः प्रभवात्' इत्यनेन तेषां तात्पर्यमस्ति यत् पदान्तर्गतस्य समस्तवर्णस्य ज्ञानेनैव पदज्ञानं भविष्यति तन्न । यथा अव्याहतरूपेण कीटानामनुगमनेनैव तेषां पंक्तिरुदीर्यते, नहि क्रमभङ्गे सति । तथैव वर्णसमूहोऽपि क्रमानुसारेणैव स्थास्यन्ति तदैवार्थबोधकाः स्युरिति । अतः 'नव'शब्देन 'वन'शब्दस्यार्थबोधस्य न किमपि कारणं प्रतीयते । शारीरिकभाष्यस्य भामतीटीकायां सुगृहीतनामधेयाः वाचस्पतिमिश्राः तौतिकाचार्यस्य—

यावन्तो यादृशा ये च पदार्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ।।

इत्येकं श्लोकमुद्धृत्यास्यैव मतस्य समर्थनं कुर्वन्ति ।

अन्यच्च—वेदान्तशास्त्रे तु एतादृशः पूर्वपक्षः उत्तरपक्षश्च विद्यमानो वर्तते । एतत्सत्यम् । परञ्च महाभाष्यस्य विचारानुसारं द्वयोः पक्षयोः तर्कस्य आवश्यकता न भवति । भाष्यकाराः कथयन्ति यत्—उच्चारणस्य द्वितीये क्षणे एव वर्णस्य विनाशो जायते । अतो वर्णसमूहस्य पौर्वापर्यत्वं भविष्यत्येव नहि । अलमत्र वर्णविवादेन । तथापि स्फोटात्मकस्य शब्दब्रह्मणः साहाय्येनैव वर्णप्रत्ययस्योद्दीप्तिर्भवति । शास्त्रे कथितमस्ति—'ब्रह्मेदं शब्दनिर्माणम्' ।

कात्यायनस्य गुरुः मीमांसावृत्तिकार उपवर्षः वर्णवादी आसीत् । तेनैव 'शब्द इति चेत् न' इत्यस्य शारीरकभाष्ये उक्तमस्ति—'वर्णा एव तु शब्द इति भगवानुपवर्षः । वर्णसमूह एव प्रतीतिमुत्पादयति । एतत्प्रकारके मते सति ते स्फोटवादस्य प्रामाण्यं न स्वीकुर्वन्ति । एषां मते—अयमेव सः शब्दः इत्याकारिकाया प्रत्यभिज्ञा भवति सैव वर्णनित्यत्वस्य प्रतिपादिका विद्यते ।

मीमांसादर्शने शब्दानां नित्यता-स्थापनाय जैमिनिना यानि सूत्राणि विरचितानि तानि सूत्राणि स्फोटविषये गृहीतव्यानि भवेयुः। यतो हि स्फोटपक्षमादाय यद्येषामालोचना भवेत् तदा सूत्राणां गौरवं सुस्थिरं स्यात्। अस्यामालोचनायामनेकशास्त्राणां समन्वयो विद्यते। जैमिनि-पतञ्जल्यादिमुनीनां मतेऽनैक्यं नास्ति।

स्फोटवादिनां मतमस्ति यत्—यथा द्रव्यस्य द्वौ प्रकारौ भवतः—व्यावहारिको पारमार्थिकश्च, तद्वत् शब्दस्यापि प्रकारद्वयं भवति—वैकृतः प्राकृतश्चेति। वाक्यपदीये भर्तृहरेः उक्तिरियं विद्यते—

स्फोटश्च ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
वृत्तिभेदे निमित्तत्वं वैकृतं प्रतिपद्यते॥

भर्तृहरेरेतत्कथनस्य कारणं विद्यते महाभाष्यस्य व्याख्यानं; तद्यथा—'ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यानुत्पत्त्यवृद्धचव्यययोगि यत् तन्नित्यमिति। तदपि नित्यं यस्मिन् तत्त्वं न विहन्यते'।

अत्रायमाशयः—स्फोटवादिनां हृद्गतो भावोऽयमस्ति यत्—अभिघातादिप्रयत्नैर्यत् श्रोत्रग्राह्यो भवति, स एव शब्दस्य वैकृतभागः कार्यभागो भवति, तथा चोपलब्धेरनन्तरं स्वयमभिज्वलितो भूत्वा यत् पदवाक्यादिबुद्धि-निर्ग्राह्यार्थविशेषमभिव्यञ्जयति स एव शब्दस्य नित्यः प्राकृतो वा भागो विद्यते। इत्थं व्याख्याने जैमिनेः सूत्रमिदं स्फोटवादस्य बाधकं नास्तीति मन्ये। महामुनेः जैमिनेः—'समं तु तत्र दर्शनम्' 'सतः परमदर्शनं विषयानागमात्' 'प्रयोगस्य परम्', 'आदित्यवद् यौगपद्यम्', 'वर्णान्तरमविकारः' इत्येतेषां पञ्चसूत्राणां निर्गलिताशयोऽयं विद्यते यत्—वर्णसमूहस्यान्तर्गतौ प्रकृति-विकृतिभावौ न भवतः, अतः शब्दाः नित्याः सन्ति।

वर्णविकारविषयकं मीमांसकानां सिद्धान्तं वैयाकरणाः न स्वीकुर्वन्ति। पाणिनिसम्प्रदाये तु प्रचलितेयमुक्तिः—

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥

एतस्योदाहरणं यथा—

वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः।
षोडशादौ विकारः स्याद् वर्णनाशः पृषोदरे॥

किञ्च—'नादवृद्धिः परा' इत्येतद् जैमिनिसूत्रस्याशयोऽयं विद्यते यत्—उच्चारकस्यानेकत्वात् शब्दस्य नादः वृद्धिमाप्नोति। अत्र जैमिनि-पतञ्जल्योरैकमत्यं तिष्ठति।

स्फोटः शब्दः। ध्वनिः शब्दगुणः।-कथम्। भेर्याघातवत् तद् यथा भेर्याघातो भेरीमाहत्य कश्चित् विंशति पदानि गच्छति, कश्चित् त्रिंशत्, कश्चित् त्रयस्त्रिंशत्। स्फोटस्तावानेव भवति ध्वनिकृता वृद्धिः। अत्रेदं तात्पर्यमस्ति यत्—नादस्याथवा ध्वनेर्वृद्धिर्भवति परञ्च स्फोटस्तु कूटस्थस्येवाविकृतभावेन तिष्ठति। जैमिनिशबरस्वामिभ्यां यः नादः कथ्यते—पतञ्जलिस्तमेव ध्वनिरिति समर्थयति। इत्थमुपरि यस्य स्फोटसिद्धान्तस्य प्रतिपादनमभूत्, स च सिद्धान्तः न श्रुतिप्रमाणितः इति केचन प्रतिपाद-

यन्ति, न च कोऽपि टीकाकारः क्वाप्युल्लेखं करोति। परञ्चैतद् कथनं केनापि प्रकारेण समुचितं नैव प्रतिभाति। महाभाष्यादौ तु अस्योल्लेखः कथञ्चित् कस्मिन्नपि रूपेऽभूदेव। 'एवं तर्हि स्फोटः शब्दः। ध्वनिः शब्दगुणः। कथं भेर्याघातवत्।

यदि वयं पुराणेषु स्फोटविषयकानां मतामतानामनुसन्धानं कुर्मस्तदास्यौचित्ये दृष्टिपातस्य सम्भवः। स्मृतिविरोधस्य परिहाराय वेदमेव चरमप्रमाणरूपे स्वीक्रियते। परञ्च सिद्धान्तानुकूलोऽर्थः यदि वेदे तिरोहितोऽथवा प्रच्छन्नो भवेत्, तथा च स्मृतावपि तस्य विषये किमपि प्राप्तं न भवेत्तदा इतिहास-पुराणादिकमेव प्रमाणत्वेन स्वीकरणीयम्। 'इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्। इत्येव नहि, स्कन्दपुराणे तु कथितमस्ति यत्—

'यन्न दृष्टं हि वेदेषु न दृष्टं स्मृतिबुद्धिना।
उभयोर्यन्न दृष्टं हि तत्पुराणे प्रगीयते'॥

अपरञ्च 'महाभारतम्' एको बृहत्कायग्रन्थोऽस्ति। हरिवंशपुराणमस्यैवाङ्गस्थानीयमस्ति। 'एकाक्षरा वै सर्वे वाक्', 'ऊकारो वै वाक्', 'उकारो वागेवेदं सर्वम्' इत्यादिकं श्रुतेः तात्पर्यमादायान्तरं प्रणवस्वरूपं स्फोटात्मकं भगवन्नामलक्षितं कृत्वा कथयति—'अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः'। अस्य तात्पर्यमिदमस्ति यत्—अक्षराणां मध्ये प्रणवस्यादि बीजमपि त्वमेवासि, एवञ्च वर्णसमूहस्याश्रयभूता स्फोटशक्तिरपि त्वमेवासि।

श्रीमद्भागवतेऽपि द्वादशस्कन्धस्य षष्ठाध्याये यो हि श्लोकः 'समाहितात्मनो ब्रह्मणः' समागतस्तस्यापि तात्पर्यमिदमेव।

परमेष्ठिब्रह्मणः यः सूक्ष्मतमो नादः उत्पद्यते स एव शब्दब्रह्म विद्यते। तदा चित्तवृत्तेर्निराधो भवति तदा योगिनः नादरूपशब्दब्रह्मणोऽनुभवं कुर्वन्ति। अस्मादेव सूक्ष्मतमनादात् त्रिमात्रात्मक ओङ्कारः अनिर्वाच्यरूपेण स्वयं प्रकाशितो भवति। तथा च स एव नादः स्फोटस्य ब्रह्मणो वा वाचको विद्यते। अनेन प्रकारेण भागवतस्य मते वर्णसमूहः उत्पत्ति-विनाशशीलः परञ्च स्फोटस्तु शब्दब्रह्मत्वात् अखण्डो नित्यश्च।

वर्णानामुत्पत्तिर्भवति अतस्तेषां विनाशोऽप्यनिवार्यरूपेण भवति। इत्येतस्य प्रमाणं न केवलं भागवतपुराणे एवापितु ब्रह्माण्डपुराणेऽपि प्राप्यते। ब्रह्माण्डपुराणन्तु कथयति यत्—दन्ततालवोष्ठादीनामाश्रयेणोच्चरितो भवति, तस्मिन् क्षणे वर्णसमूहमुत्पत्तिशीलमिति कथयित्वा 'यत्कृतकं तन्नष्टम्' इति सिद्धान्तानुसारं सः विनाशशीलोऽस्ति। अतोऽत्र जिज्ञासा भवति यत्—वर्णसमूहः क्षरोऽस्ति तदा तमक्षरं कथं कथ्यते। अत्र अक्षरविधानस्य कारणमस्ति यत्—वर्णराशेः वैकृतभाग एव क्षरः = विनाशशीलोऽस्ति, परञ्च तस्य प्राकृतभागः स्फोटरूपं शब्दब्रह्मनित्यमखण्डश्चास्ति अतोऽक्षरो विद्यते।

सांख्यदर्शने कथितमस्ति यत्—'प्रतीत्यप्रतीतिकं न स्फोटात्मकः शब्दः'। अस्मिन् स्थले व्याख्यातुर्जिज्ञासा विद्यते यत्—यदि वर्णादेव प्रतीतेरुत्पत्तिर्भवति तदा अस्य मध्ये एकस्यातिरिक्तस्य स्फोटस्य कल्पनायाः काऽऽवश्यकता। वर्णेन स्फोटः, स्फोटेन चार्थस्य प्रतीतिर्भवति। अस्याः कल्पनाया अपेक्षया इदमेव समुचितमस्ति यत्—

वर्णेनार्थस्य प्रतीतिर्भवति । सांख्यकाराणां मते—'यत्परः शब्द स शब्दार्थः' । सांख्यकाराणां मतममान्यमस्ति । एषां शास्त्रे प्रकृतिपुरुषातिरिक्तं ब्रह्मतत्त्वादीनां कल्पना न विद्यते । यतो हि स्फोटः ब्रह्मतत्त्वस्यान्तर्गतो विद्यते, अतो यदि सांख्ये वर्णवादस्य ग्रहणं स्फोटस्य चास्वीकृतिरस्ति चेत् किमत्र चित्रं वैचित्र्यं वा । एवञ्च नैयायिका अपि सांख्यकारस्येव स्फोटवादस्यावश्यकतां न स्वीकुर्वन्ति । तेषां कथनमस्ति यत्—वर्णोच्चारणेन यस्मिन् समये पदस्यार्थो ज्ञायते तस्मिन् समये वर्णातिरिक्तस्य स्फोटस्य कल्पनैव निष्प्रयोजना । तेषां मते वर्ण एव शब्दः, तथा च वर्णस्योच्चारणं भवति, अतः उत्पत्तिशीलो विद्यते । 'यत्कृतकं तदनित्यम्' इति निर्देशानुसारेण शब्दस्य नित्यता न कदापि स्वीकरणीया ।

नैयायिकाः शब्दानामुत्पत्तिमवलोक्य शब्दानामनित्यत्वं कथयन्ति । सामान्यरूपेण दृश्यते यत्—यस्योत्पत्तिर्भवति तस्य नाशोऽपि जायते । यथा—घटपटादीनाम् । आकाशस्योत्पत्तिर्न भवति, अतः विनाशोऽपि न जायते । नैयायिकानां मते शब्दोऽपि घटपटादिवत् निर्माणशीलोऽस्ति, अतोऽनित्यो विद्यते ।

नैयायिकचिन्तनधारायां पञ्चावयवाः स्वीक्रियन्ते । ते च यथा—प्रतिज्ञा, हेतुः उदाहरणम्, उपनयः निगमनञ्चेति । मीमांसायां दृष्टौ शब्दं नित्यं द्रव्यञ्च कथ्यते । शब्दस्य नित्यतायाः सम्बन्धे सन्देहस्य किं कारणम् अस्ति ? नैयायिका उत्तरयन्ति यत्—सर्वेषां वस्तूनामुत्पत्तिविनाशौ दृश्येते । शब्दोऽप्युत्पत्तिशीलः अतोऽनित्यो विद्यते । नित्यता बोधकत्वमेवास्य हेतुः । उत्पत्त्यैव वस्तु विनाशशीलं भविष्यति । अस्य किं प्रमाणम् । नैयायिका घटपटादीनामुदाहरणानि प्रयच्छन्ति । तुल्यजातित्वकारणात् शब्दोऽपि घटादिवत् कृतकत्वोऽस्ति, कारणमनित्यमित्युपनयः । उपनयेनायं सिद्धान्तः सुस्थिरो यत् शब्दोऽनित्य इति । न्यायसरणिः कस्याप्यतीन्द्रियपदार्थस्य समाधाने समर्था नास्ति । श्रुतेरुच्चैर्घोषणा विद्यते—'नैषा तर्केण मतिरापनेये'ति । अयमत्राशयः—तर्कबुद्धया कदापि तत्त्वस्य प्राप्तिर्नैव भविष्यति । एतस्य कथनस्य पुराणमप्यनुवदति, तद्यथा—

'अनित्या खलु ये भावा न तांस्तर्केण योजयेत् ।
प्रकृतिभ्यः परं यश्च तदचिन्त्यस्य लक्षणम्' ॥

अर्थात् यः ( भावः ) त्रिगुणातीतः स एवानित्यः । अचिन्त्यस्य पदार्थस्य सम्बन्धे तर्कबुद्धेरवतारणा व्यर्था विद्यते । स्फोटः शब्दः ब्रह्मस्वरूपो विद्यते अतोऽयं अखण्डः गुणातीतः नित्यं वस्तु विद्यते । स्फोटस्यान्यदुदाहरणं नास्ति, स्वयमेव स्वस्योपमा विद्यते ।

'गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव' ॥

भर्तृहरयोऽप्येतदेव कथयन्ति, तद्यथा—

'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः' ॥

---

# निरुक्तम्

## ( निरुक्तं श्रोत्रमुच्यते )

षट्सु वेदाङ्गेषु निरुक्तं चतुर्थस्थानं भजते। तच्च वेदपुरुषस्य श्रोत्रमुच्यते। 'निरुक्तं श्रोत्रमुच्यते' इति पाणिनीयशिक्षायांस पष्टमुदघोषितम्। अस्मिन् विषये वेदभाष्यकाराः सायणाचार्याः स्वचतुर्वेदभाष्यभूमिकायां कथयन्ति यत्—'अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्' इति। निरुक्तस्य शाब्दिकीनिरुक्तिरेव-भविष्यति—निःशेषादुक्तमिति निरुक्तम्। अतो यदि शिक्षादीनि वेदाङ्गानि वेदस्य बाह्यानि तत्त्वानि निरूपयन्ति तदा निरुक्तं वेदविज्ञानस्यान्तरिकं स्वरूपं स्पष्टतः उद्घाटयति। एतदपि अस्य वैशिष्टयं विद्यते यदन्यानि वेदाङ्गानि प्रायो विभिन्नेषु सूत्रेषु लिखितानि सन्ति, इदञ्च निरुक्तं गद्यशैलीं भजते। अन्यच्च वेदार्थस्यावगमे निघण्टोरनन्तरं निरुक्तमेव प्रमाणम्। निरुक्तं निघण्टोः भाष्यभूताटीका विद्यते। निघण्टौ वेदस्य काठिन्यं भजतां शब्दानां समुच्चयो वर्तते। वैदिककोश इत्यपि कथयितुं पारयामो वयम्। निघण्टोः संख्याविषये पर्याप्तमतभेदो दृश्यते। साम्प्रतं समुपलब्धो निघण्टुः एक एवास्ति अस्योपरि च महर्षि-यास्कविरचितं निरुक्तमस्ति। केचन विद्वांसः यास्कं ऋषिप्रवरमेव निघण्टोश्चापि रचयिता अस्तीति स्वीकुर्वन्ति। परञ्च प्राचीनपरम्पराया अनुशीलनेनेयं धारणा प्रमाणिता न भवति। निरुक्तस्यारम्भे निघण्टुं समाम्नाय इति कथितो वर्तते। अस्य शब्दस्य च या व्याख्या दुर्गाचार्यमहाभागेन कृता, तया व्याख्यया तु अस्य प्राचीनत्वमेव सिद्धयति। महाभारतस्य मोक्षधर्मपर्वणि प्रजापतिः कश्यपोऽस्य निघण्टोः रचयितृत्वेन ख्यापितो वर्तते। तथा च तत्रोक्तं यथा—

'वृषो हि भगवान् धर्मः ख्यातो लोकेषु भारत।
निघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम्॥
कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते।
तस्माद् वृषाकपिं प्राह कश्यपो मां प्रजापतिः'॥

वर्तमाने निघण्टौ 'वृषाकपि' शब्दः संगृहीतो विद्यते। अतः पूर्वोक्तकथनानुसार-मयमेव प्रतीयते यत्—महाभारतकाले प्रजापतिकश्यपोऽस्य निघण्टो रचयितृत्वेन ख्यापितः आसीत्। निघण्टौ पञ्चाध्यायाः विद्यमानाः सन्ति। तेषु त्रयोऽध्यायाः 'नैघण्टुककाण्डं, चतुर्थाध्यायो नैगमकाण्डं, पञ्चमाध्यायश्च 'दैवतकाण्ड'मिति च कथ्यते। प्रथमतस्त्रिष्वध्यायेषु तु पृथ्व्यादिबोधकानामनेकानां पदानामेकत्र संग्रहो विद्यते। द्वितीयं काण्डम् 'ऐकपदिक'मित्यपि कथयन्ति। 'नैगम'स्य तात्पर्यमिदमस्ति यत्—एषां प्रकृति-प्रत्यययोः यथार्थावगमनं न भवति। यथोक्तमस्ति अनवगत-संस्कारांश्च निगमान्। दैवतकाण्डे देवानां स्वरूपस्य स्थानस्य च निर्देशो विद्यते।

## निघण्टोः व्याख्याकारः

साम्प्रतं ( विंशतितमशतके ) निघण्टोः एकैव व्याख्या समुपलब्धा भवति। तद्व्याख्यायाः कर्तुर्नाम विद्यते—देवराजयज्वा। एषां पितुर्नाम यज्ञेश्वर आसीत्, पितामहस्य च 'देवराजयज्वा'। पितामह-पौत्रयोरेकमेवनाम विद्वत्सु कौतुकमावहति। इमे रंगेशपुर्याः सन्निकटस्य कस्यापि ग्रामस्य निवासिन आसन्। नाम्ना प्रतीयते यदिमे सुदूरदक्षिण-निवासिन आसन्। एतेषां स्थितिकालविषये मतद्वयं प्रचलितमस्ति। केचनविद्वांसः सायणादर्वाचीनाः इमे इति कथयन्ति। परञ्च प्रमाणैः सिध्यति यदिमे सायणात् प्राचीनाः सन्ति। इत्येव न्यायसङ्गतं युक्तिकरश्च प्रतिभाति। यतो हि आचार्यसायणेन स्वकृते ऋग्वेदस्य भाष्ये निघण्टुभाष्यवचनानां निर्देशः कृतोऽस्ति। अपि च देवराजयज्वनः भाष्ये एतानि वचनानि स्वल्पपाठान्तरैः सह समुपलब्धानि सन्ति। अत्रैतद्बोद्धव्यं यत्—अस्य भाष्यस्यातिरिक्तं न किमपि निघण्टुभाष्यं विद्यमानमस्ति। अपरञ्च देवराजेन स्वभाष्यभूमिकायां क्षीरस्वामिनस्तथाऽनन्ताचार्यस्य च निघण्टुव्याख्ययोः उल्लेखः कृतः। तद्यथा—इदं च क्षीरस्वामी-अनन्ताचार्यादि-कृतां व्याख्यां निरीक्ष्य क्रियते। अनन्ताचार्यस्य निर्देशस्तु अत्र प्रथमत एव प्राप्नोति। क्षीरस्वामिनो मतस्य च निर्देशोऽत्र बाहुल्येन विद्यमानोऽस्ति। क्षीरस्वामिनः 'अमरकोशस्य' मान्याष्टीकाकाराः सन्ति। अपि च देवराजस्योद्धरणानि अमरकोश-टीकायां ( अमरकोशोद्घाटने ) यथावदुपलब्धानि भवन्ति। अतो निघण्टुव्याख्यया देवराजस्याभिप्रायः अस्यैवामरकोशस्य व्याख्यया प्रतीयते। 'निघण्टुनिर्वचनमेतस्य भाष्यस्य नाम विद्यते। भाष्यकारेण देवराजयज्वना स्वप्रतिज्ञानुसारं नैघण्टुक-काण्डस्यैव निर्वचनमधिकेन विस्तरेण कृतम्। नैगमकाण्ड-दैवतकाण्डयोश्च व्याख्या स्वल्पाकारा विद्यते। अस्य भाष्यस्योपोद्घातः वैदिकभाष्यकाराणामितिवृत्तज्ञानायाकर इव प्रतीयते। सैषा व्याख्या महत्त्वपूर्णा प्रामाणिकी चोपादेया विद्यते। अस्यां व्याख्या-यामाचार्यस्कन्दस्वामिनः ऋग्भाष्यात् स्कन्दमहेश्वरस्य च निरुक्तभाष्यटीकातः सविशेषं साहाय्यं गृहीतमस्ति। अत्र च प्राचीनानां प्रमाणानामप्युद्धरणमतीवरोचकं ज्ञानवर्द्धक-ञ्चास्ति। सायणपूर्वत्वात् देवराजस्य व्याख्या निरुक्तेऽश्च सविशेषं महत्त्वमस्ति।

सुप्रसिद्धेन तान्त्रिकेन भास्कररायेन विरचितः एकः स्वल्पाकारः ग्रन्थः समुपलब्धो भवति। यस्मिन् निघण्टोः शब्दाः अमरकोशस्य शैल्यां श्लोकबद्धाः कृताः सन्ति। येन कण्ठस्थीकरणे सौविध्यं जायते।

## निरुक्तकालः

### ( निरुक्तानां समयः )

ऐतिहासिकदृष्टया निघण्टुकालानन्तरं निरुक्तानां समयस्य शुभारम्भो भवति। अयमेव कालो निरुक्तयुगस्य। अस्मिन्नेव युगे निरुक्तस्य वेदाङ्गत्वं सिध्यति। श्रीमतो दुर्गाचार्यस्य दुर्गवृत्त्यनुसारं निरुक्तानां संख्या चतुर्दश आसीत्। तथा चोक्तं—'निरुक्तं चतुर्दशप्रभेदम्' इति। यास्कस्योपलब्धे निरुक्ते द्वादश निरुक्तकाराणां नामानि मतानि च निर्दिष्टानि सन्ति। अकारादिक्रमेण तेषां नामानि चेमानि सन्ति—

( १ ) अग्रायणः, ( २ ) औपमन्यवः, ( ३ ) औदुम्बरायणः, ( ४ ) और्णवाभः, ( ५ ) कात्थक्यः, ( ६ ) क्रौष्टुकिः, ( ७ ) गार्ग्यः, ( ८ ) गालवः, ( ९ ) तैटीकिः, ( १० ) वार्ष्यायणिः, ( ११ ) शाकपूणिः, ( १२ ) स्थौलाष्टीविः, ( १३ ) त्रयोदशश्च निरुक्तकारः स्वयमेव यास्कः, चतुर्दशात्मको निरुक्तकारः क आसीदित्यद्यापि सन्दिग्ध एव । एषां निर्दिष्टानां निरुक्तकाराणां विशिष्टस्य मतस्य परिज्ञानं निरुक्तानामनुशीलनेन सम्यक्तया भविष्यति । विशिष्टज्ञानाय 'वैदिकवाङ्मयस्येतिहासे द्रष्टव्यः । एषु ग्रन्थकारेषु 'शाकपूणि' इत्यस्य मतं विस्तरेणोद्धृतमस्ति । बृहद्देवतायामपि एतन्मतं निर्दिष्टमस्ति । एवञ्च बृहद्देवतायां पुराणेषु च शाकपूणेः 'रथीतरशाकपूणि' इति नाम्ना स्मृतमस्ति । एते यास्कात् भिन्नं मतं स्वीकुर्वन्तीति विदुषामाशयः ।

## यास्कस्य निरुक्तम्

निरुक्तं वेदस्य षडङ्गेष्वन्यतममस्ति । साम्प्रतमिदमेव यास्कविरचितं निरुक्तमस्य वेदाङ्गस्य प्रतिनिधिभूतो ग्रन्थः । निरुक्ते द्वादशाध्यायाः सन्ति, अवसाने च परिशिष्टरूपे द्वौ अध्यायौ स्तः । अनेन प्रकारेण समग्रः ग्रन्थः चतुर्दशाध्यायेषु विभक्तोऽस्ति । परिशिष्टे गृहीतौ द्वावप्यध्यायौ अर्वाचीनौ न भवितुमर्हतः । यतो हि सायण-उव्वटौ भाष्यकारौ आभ्यामध्यायाभ्यां सुपरिचितावास्ताम् । तत्रोव्वटेन स्वीये यजुर्वेदभाष्ये निरुक्ते समुपलब्धं वाक्यनिर्दिष्टमिति । अतोऽयमंशः भोजराजात् प्राचीन इति स्वत एव सिद्धः ।

## यास्कस्य प्राचीनत्वम्

यास्कस्य प्राचीनतायां कस्यापि प्रकारस्य संशीतिलेशो नास्ति । इमे महानुभावा पाणिनेरपि प्राचीनतराः सन्ति । संस्कृतभाषायाः यो हि विकासः एतेषां निरुक्ते प्राप्यते, स च पाणिनीयाष्टाध्याय्यां व्याख्यातरूपात् प्राचीनतरः प्रतिभाति । महाभारतस्य शान्तिपर्वणि यास्कस्य निरुक्तकारत्वस्य सुस्पष्टो निर्देशो विद्यते । तद्यथा—

'यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान् ।
शिपिविष्ट इति ह्यस्माद् गुह्यनामधरो ह्यहम् ॥
स्तुत्वा मां शिपिविष्टेति यास्क ऋषिरुदारधीः ।
यत्प्रसादादधो नष्टं निरुक्तमभिजग्मिवान्' ॥

इत्युल्लेखमादाय वयमिति कथयितुं समर्थाः यत् यास्कस्य कालः वैक्रमात् सप्तम-अष्टम वा शतकात् पूर्वमासीत् । इत्यत्र कापि विचिकित्सा नास्ति । यास्कस्यास्य ग्रन्थस्य महनीयता अत्यधिका विद्यते ।

ग्रन्थस्यारम्भे यास्केन निरुक्तसिद्धान्तस्य वैज्ञानिकं प्रदर्शनं कृतम् । एषां काले वेदार्थस्यानुशीलनाय अनेके पक्षाः आसन्, येषां नामानि अधोलिखितानि सन्ति । तच्च यथा—( १ ) अधिदैवतम्, ( २ ) अध्यात्मम्, ( ३ ) आख्यानसमयः, ( ४ ) ऐतिहासिकाः, ( ५ ) नैदानाः, ( ६ ) नैरुक्ताः, ( ७ ) परिव्राजकाः, ( ८ ) याज्ञिकाः । प्रस्तुतेनानेन निर्देशेन वेदार्थानुशीलनस्येतिहासे प्रभावोत्पादकत्व-

मायाति । अपरञ्च यास्कस्य प्रभावोऽवान्तरकालीनेषु वेदभाष्यकारेषु विशेषरूपेण दृश्यते । सायणेनास्याः पद्धतेः अनुसरणं कृत्वा वेदभाष्यरचनायां महत्साहाय्यं प्राप्तम् । यास्कस्येमां प्रक्रियामाधुनिकभाषाविदोऽपि स्वीकुर्वन्ति । अत एव विद्वत्सु ख्यातमस्ति यद् यास्कसदृशो भाषावैज्ञानिको विश्वस्मिन् दुर्लभ एवेति । सर्वे भाषावैज्ञानिकाः यास्कस्य ग्रन्थस्य महत्त्वं स्वीकुर्वन्ति । सैषा धारणा सर्वत्र प्रसृता विद्यते ।

अन्यच्च निरुक्तं स्वयमेव भाष्यरूपं विद्यते, तथापि स्थाने स्थाने इयद्दुरूहं विद्यते यद् विदुषष्टीकाकारानपि तस्यार्थपरिज्ञानाय शिरसि वेदना जायते । तथापि तस्य पाठः यथार्थरूपेण परम्परया प्राप्तो न भवति । भाषायाः काठिन्येन सह तस्य पाठा अपि स्थाने स्थाने तथा भ्रष्टाः सन्ति यत्--दुर्गाचार्यसदृशं विद्वांसमपि काठिन्यस्यानुभवो जायते । वैक्रमशतकाद् बहोः पूर्वं निरुक्तस्य व्याख्याकरणे विदुषां ध्यानमाकृष्टमासीत् । एतद् ज्ञानमस्मान् पतञ्जलेः महाभाष्याध्ययनेनैव भवति । अष्टाध्याय्याः ४।३।३६ इत्यस्य सूत्रस्य भाष्ये एते प्रतिपादयन्ति यत्--'शब्दग्रन्थेषु चैषा प्रभूततरा गतिर्भवति । निरुक्तं व्याख्यायते । न कश्चिदाह पाटलिपुत्रं व्याख्यायत इति' । 'न कश्चिदाह' इत्यनेन पतञ्जलेः संकेतः कं व्याख्यानं स्मारयति इत्यधुनापि न ज्ञायते ।

### निरुक्तस्य टीकाकाराः

साम्प्रतं निरुक्तस्योपरि सर्वाभ्यो विस्तृता सम्पूर्णा च या टीकोपलब्धा भवति सा विद्यते दुर्गाचार्यवृत्तिः । परश्वास्य विषयस्य नेयं वृत्तिः प्रारम्भिको ग्रन्थः । एतत्तु निश्चितमेव । दुर्गवृत्तौ चतुर्षु स्थलेषु कस्यापि वार्त्तिककारस्य श्लोकाः उद्धृताः सन्ति, प्रसंगोपात्तेन सुस्पष्टं विज्ञायते यद् तद्वार्तिकमस्मिन्नेव निरुक्ते आसीत् । इति तु पूर्वमपि कथितं यत्—निरुक्तं भाष्यरूपमस्ति । अतोऽस्योपरि वार्तिकस्य रचनाऽयुक्ता नास्ति । निरुक्तवार्तिकस्यास्तित्वमेकेनान्येन ग्रन्थेनापि प्रमाणिता भवति । मण्डनमिश्रेण विरचितस्य 'स्फोटसिद्धि'नामकस्य ग्रन्थस्य 'गोपालिकाटीकायां' निरुक्तवार्त्तिकस्य षट् श्लोकाः समुद्धृताः सन्ति । इमे श्लोकाः निरुक्तस्य १।२० इत्यस्य व्याख्यानभूताः सन्ति ।

अस्माद् कारणाद् आभ्यां प्रमाणाभ्यामेष निष्कर्षः समायाति यत्—निरुक्तवार्तिकग्रन्थस्यास्तित्वमासीदेव । प्राचीनोऽयं ग्रन्थः इत्यत्रापि न कोऽपि सन्देहः । परश्चाद्यपर्यन्तमस्य ग्रन्थस्योपलब्धता न विज्ञायते । यद्यस्य ग्रन्थस्योद्धारो भवेत् तदा वेदार्थानुशीलनस्येतिहासे एकस्य महत्त्वपूर्णस्य प्रामाणिकस्य च वस्तुनः प्राप्तिर्भवेत् । तथैव बर्बरस्वामिनष्टीकाया अपि तादृशी स्थितिर्वर्तते । इमे महानुभावाः स्कन्दस्वामिना पूर्वटीकाकारेषु स्मृताः सन्ति । अपि चैते दुर्गाचार्यादपि प्राचीनतरा इति विद्वांसः कथयन्ति । यावदस्य ग्रन्थस्योपलब्धिर्न भवति तावद् वयं सुनिश्चितरूपेण न कथयितुं समर्थाः यद् बर्बरस्वामिनः पूर्वनिर्दिष्टाद्वार्तिककाराद्भिन्नाः अभिन्नाः वा ।

( १ ) **दुर्गाचार्यः**—निरुक्तस्य प्राचीनोपलब्धष्टीकाकारो दुर्गाचार्य एवास्ति । परञ्चं नायमाद्यष्टीकाकारः इति सुनिश्चितम् । अनेन महता स्ववृत्तौ प्राचीनटीका-

काराणां व्याख्याया अनेकत्रोल्लेखः कृतः। वेदानामिमे कीदृशाः मर्मज्ञा आसन् इति तु दुर्गवृत्तेः साधारणपाठकानप्यनायासेन प्राप्तुं शक्यते। अस्यां वृत्तौ निरुक्तस्य तदुल्लिखितमन्त्राणाञ्चातिविस्तरेण सह व्याख्या प्रस्तुता विद्यते। निरुक्तस्यात्र प्रतिशब्दः समुद्धृतः। अस्य वृत्तेः आधारमादाय समग्रस्य निरुक्तस्य शाब्दिकस्वरूपं स्थापयितुं क्षमो भविष्यति कश्चिदपि पाठकः। एषां वैदुष्येण सह नम्रताऽपि प्रशंसनीया विद्यते। निरुक्तस्य दुर्घटांशानां व्याख्यावसरे एभिः सुस्पष्टीकृतं यत्—एतादृशानां काठिन्ययुक्तानां मन्त्राणां व्याख्याने विदुषामपि मतिः कुण्ठिता रुद्धा वा जायते। वयन्तु अस्य विषये एतावन्मात्रं विद्मः। तथाहि तच्छब्दैरेव, यथा—

'ईदृशेषु शब्दार्थन्यायसङ्कटेषु मन्त्रार्थघटनेषु दुरवबोधेषु मतिमतां मतयो न प्रतिहन्यन्ते, वयं त्वेतावदत्रावबुध्यामहे इति ७।३१।

अपरञ्च एभिः क्वचित्-क्वचित् स्वयमेव नूतनस्य पाठस्य योजना कृता। अनेन स्पष्टं भवति यत्—एभिः निरुक्तस्य व्याख्यायां सूक्ष्मानुसन्धानेन कार्यं सम्पादितम्। अस्माकं सौभाग्येनेयं वृत्तिः अद्य समुपलब्धा विद्यते, नो चेत् निरुक्तस्य पद-पदार्थावगमे मतिस्तिरोहिता भवेत्। परञ्च दुःखस्य विषयोऽयं वर्तते यत्—स्वनामधन्यस्य दुर्गाचार्यस्य विषयेऽस्माकमैतिहासिकं ज्ञानमतिस्वल्पमेवास्ति। इमे महाशयाः कापिष्ठलशाखाध्यायिनो वशिष्ठगोत्रिणः सन्तीति एभिः स्वयमेव निरुक्ते ४।१४ इत्यस्मिन् स्थाने प्रकटितम्। प्रत्येकाध्यायस्य समाप्तौ वृत्तेः पुष्पिकेदृशी विद्यते—'इति जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ अध्यायः समाप्तः।

इत्यनेन ज्ञायते यत्—इमे जम्बूमार्गाश्रम-निवासिन आसन्। परञ्च स्थानमिदं कुत्रास्ति इत्यस्य समुचितोत्तरप्रदानमद्यत्वे कठिनमस्ति। डाक्टरलक्ष्मणस्वरूप महोदयास्तु एतत् स्थानं काश्मीरराज्यस्य ( प्रदेशस्य ) सुप्रसिद्धं नगरं 'जम्बू' इत्यामनन्ति। परञ्चैतद्विपरीतं श्रीमतो भगवद्दत्तस्य विदुषः एतदनुमानं विद्यते यदेते गुर्जरप्रदेशस्य निवासिनः आसन्। तैर्मैत्रायणीसंहिताया अधिकमुद्धरणं स्ववृत्तौ प्रदत्तमस्ति। प्राचीनकाले संहितेयं गुर्जरप्रदेशे विशेषरूपेण सुप्रसिद्धाऽऽसीदिति। अस्यानुमानस्य अयमेवाधारो विद्यते।

फलतो दुर्गाचार्यस्य कालनिरूपणं साम्प्रतं यथार्थरीत्या नाभूत्। अस्याः वृत्तेः सर्वतोऽधिका प्राचीना हस्तलिखिता प्रतिः १४१४ वैक्रमाब्दस्य विद्यते। अतो दुर्गाचार्यस्य कालोऽस्मात्प्राचीनः स्वीकर्त्तव्यः। ऋग्वेदस्य भाष्यकाराः उद्गीथमहाशयाः दुर्गाचार्यस्य वृत्त्या परिचिताः प्रतीयन्ते। आचार्योद्गीथस्य कालः विक्रमस्य सप्तमशतको विद्यते। परिणामतो दुर्गाचार्यस्य कालः सप्तमशतकादर्वाचीनो नैव स्वीकर्त्तव्यः। न तावत् स्वीकारयोग्य इति भावः।

( २ ) **स्कन्दमहेश्वरः किं वा स्कन्दस्वामी**—एतेषां टीका निरुक्तस्यान्यटीकाकारेषु प्रकाशिता विद्यते। सेयं टीका प्राचीना पाण्डित्यविलसिता च विद्यते। इमे स्कन्दस्वामिनस्ते एव सन्ति, यैः ऋग्वेदस्योपरि भाष्यं लिखितम्। एते गुर्जरप्रदेशस्य सुविख्यातायाः नगर्याः वलभ्याः निवासिनः आसन्। एषां पितुर्नाम भर्तृध्रुव आसीत्।

समयश्च वैक्रमाब्दस्य सप्तमशतकस्योत्तरार्धो विद्यते। एषामृग्वेदस्य भाष्यं प्रामाणिकमस्ति, सहैव स्वल्पाक्षरे स्थितेऽपि सारगर्भितमस्ति। एतादृशैर्विशिष्टैर्विद्वद्भिर्विरचितेयं निरुक्तटीकाऽपि स्ववैशिष्टचं स्थापयति।

( ३ ) **निरुक्तनिचयः**—अस्य ग्रन्थस्य रचयिता कोऽपि वररुचिर्नामधेयः। नेयं निरुक्तस्य साक्षाद्वर्तिनी व्याख्या, अपि तु निरुक्तसिद्धान्तानां प्रतिपादिका शतश्लोकानां स्वतन्त्रा व्याख्या विद्यते। निरुक्तस्यासां टीकानामनुशीलनेन वयं भाषाशास्त्रीयेष्वनेकज्ञातव्यविषयेषु प्राप्नुमः। निरुक्ते तद्वृत्तिषु च प्रदत्तसङ्केतान् गृहीत्वा मध्ययुगस्य विद्वद्भिर्वेदभाष्यनिबन्धने साफल्यं प्राप्तम्। मध्यकालीनभाष्यकाराः स्वसिद्धान्तानां प्रकटीकरणे एभ्यः ग्रन्थेभ्यः स्फूर्ति=प्रेरणां च प्रापुः। अस्मिन् विषये नास्ति सन्देहावसरः। एषां ग्रन्थानामैतिहासिकं महत्त्वं वेदार्थानुशीलनविषयेऽत्यधिकमस्ति। सायणाचार्यास्तु यास्कस्य दुर्गाचार्यस्य चान्यव्याख्याकाराणाञ्चाधमर्णतां धारयन्ति। तैरेतत्तथ्यं स्पष्टमेव स्वीकृतम्।

## निरुक्तस्य महत्त्वम्

वेदभाष्यकारस्य सायणाचार्यस्य मतानुसारं निरुक्तस्य लक्षणमस्ति—'अर्थाऽवबोधे निरपेक्षतया पदजातं यत्र तद् निरुक्तम्' अत्रायमाशयो विद्यते यत्—अर्थज्ञानाय स्वतन्त्ररूपेण यः पदानां संग्रहः स एव निरुक्तमिति कथ्यते।

श्रीमद्दुर्गाचार्यस्य स्ववृत्तौ निरुक्तविषये कथनमस्ति यत् 'प्रधानं चेदमितरेभ्योऽङ्गेभ्यः सर्वशास्त्रेभ्यश्च अर्थपरिज्ञानाभिनिवेशात्। अर्थो हि प्रधानः, तद्गुणः शब्दः, स च इतरेषु व्याकरणादिषु चिन्त्यते। यथाशब्दलक्षणपरिज्ञानं सर्वशास्त्रेषु व्याकरणात्। एवं शब्दार्थनिर्वचनपरिज्ञानं निरुक्तात्' इति। अपरञ्च कल्पे मन्त्राणां विनियोगस्य चिन्तनं भवति। यः मन्त्रः यमर्थं शब्दतः संस्कारे समर्थो भवति, तत्रैव तस्य प्रयोगो भवति। अनेन प्रकारेण कल्पोऽपि मन्त्राणामर्थानुसन्धानस्योपरि विनियोगस्य विधानं करोति। अतो निरुक्तं कल्पादपि अधिकस्य महत्त्वस्य विद्यते। अत्र चायं निष्कर्षः शब्दस्य लक्षणन्तु व्याकरणानुसारं क्रियते, परञ्च शब्दार्थयोश्च निर्वचनस्य ज्ञानं निरुक्तेनैव भवति। अनेन प्रकारेण निरुक्तं वेदार्थज्ञानाय नितान्तमावश्यकमस्ति। अपि चेदं व्याकरणशास्त्रस्य पूरकमस्ति।

निरुक्ते वैदिकशब्दानां निरुक्तिर्विद्यते। निरुक्तिशब्दस्य चार्थो भवति व्युत्पत्तिरिति। निरुक्तस्येदं सर्वमान्यं मतमस्ति यत्—प्रत्येकः शब्दः येन केनापि धातुना सहावश्यमेव सम्बन्धितोऽस्ति। अतो निरुक्तकाराः शब्दानां व्युत्पत्ति प्रदर्श्य धातुना सह विभिन्नप्रत्ययानां निर्देशं कथयन्ति। निरुक्तस्यानुसारं सर्वे शब्दाः व्युत्पन्नाः सन्ति। अर्थात् ते शब्दाः कस्मादपि न कस्माद् धातोः निर्मिताः सन्ति। सर्वे शब्दाः धातुजाः। वैयाकरणस्य शाकटायनस्यापि इदमेव मतमासीत्। अस्योल्लेखः यास्केन पतञ्जलिना च स्वग्रन्थेषु कृतः। शब्दानां व्युत्पत्तिरनेकविधा भवति। 'दूहिता' शब्दस्य व्युत्पत्तिविषये यास्कमहोदयाः लिखन्ति यत्—सा ( दुहिता ) पितुः सकाशाद् दूरे स्थितायामेव तस्य हितं करोति ( दूरे=दूरदेशस्थितायामेव, हिता=हित-

कारिणी ), अस्य शब्दस्य भिन्नार्थश्च—सा पितुः सकाशात् सर्वदा धनं द्रव्यं दोग्धि अथवा सा स्वयमेव गां दोग्धि।

निरुक्तं यस्मिन् आधारे प्रवृत्तं भवति—अर्थात् प्रत्येकं संज्ञापदं धातोः व्युत्पन्नमभवत्, स आधारः नितान्तं वैज्ञानिको विद्यते। अद्यत्वे अस्यैव नाम विद्यते भाषाविज्ञानम् इति। अस्य विज्ञानस्योन्नतिः पाश्चात्य जगति १०० शतवर्षाभ्यन्तरे एवाभूत्। साप्युन्नतिः संस्कृतभाषायाः पाश्चात्यदेशे ( यूरोपे ) प्रचालितायां सति। परञ्च ध्यातव्यमत्राद्यतः सहस्रत्रयवर्षपूर्वं वैदिकैः ऋषिभिः अस्य शास्त्रस्य सिद्धान्तानां वैज्ञानिकरीत्या निरूपितमासीत्। भाषाशास्त्रस्येतिहासे भारतवर्षमेव अस्य मूलोद्गमस्थानमस्ति, नात्र कोऽपि सन्देहावसरः। निरुक्तस्यारम्भेऽस्य विषयस्य येषां नियमानां प्रतिपादनमुपलब्धं भवति, तद्विशेषं महत्त्वं धारयति।

## निरुक्तस्य शैली

निरुक्तं भाषाशास्त्रदृष्टया—एकमनुपमं रत्नमस्ति। निरुक्तस्य मान्यः सिद्धान्तोऽस्ति यत्—सर्वे शब्दाः नामधातोः उत्पन्नाः भवन्ति। वैयाकरणेषु केवलं शाकटायनस्यैव मतमिदमासीत्। तथा चोक्तम्—'सर्वं धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्' इति। अस्य मतस्य परीक्षणं समीक्षणं वा गार्ग्यनामकेन केनाप्याचार्येण महद्युक्तीनां बले कृतम्। येषां खण्डनं यास्केन प्रबलतरयुक्तिभिः कृतम्। कस्या अपि भाषायाः मूलं धातुरेव भवति। अस्य तथ्यस्य समुद्घाटनं यास्केनाद्यतः सहस्रत्रयवर्षपूर्वमेव कृतम्। एतत् तथ्यमाधुनिकतुलनात्मकभाषाशास्त्रस्य मेरुदण्डमस्ति। यास्केन स्ववैज्ञानिकमतस्य प्रस्थापनायै अनेका सबलाः युक्तयः प्रदत्ताः, याभ्यः परिचयः आवश्यको विद्यते।

गार्ग्यस्याद्याऽऽपत्तिः 'वस्तुनः क्रियानुसारं नाम निर्धारणात् अनेकेषां वस्तूनामेका क्रिया सम्भवादनेकेषामेकं नाम सम्भविष्यति'। इत्येतदसङ्गतमस्ति। समानकर्मकर्तृषु जनेष्वपि तेनैव कर्मणा तेषु व्यक्तिविशेषस्य श्रेणीविशेषस्य वा नाम सम्भवति, सर्वेषां नहि। लोकव्यवहारस्येयमेव शैली विद्यते। तक्षणस्य परिव्रजनस्य च क्रियाणामनेकव्यक्तीनां कृतेऽपि तक्षणकर्तुर्नाम 'तक्षा' संन्यासिनश्च नाम 'परिव्राजक' इति विद्यते। अन्यस्य न। शब्दस्य स्वभाव एवेदृशो यत् कयापि क्रियया कस्याप्येकस्यैव वस्तुनः प्रतिपादनं करोति। नहि सर्वेषां वस्तूनां। एकेन वस्तुना अनेकेषां क्रियाणां योगे स्थितेऽपि कस्या अपि क्रियाया अनुसारं तन्नामकरणं भवति। एष शब्दस्य स्वभावस्तथा लोकप्रसिद्धो व्यवहारश्च विद्यते। 'तक्षा' 'परिव्राजक'श्चान्यक्रियासम्पादनमपि करोति। परञ्च क्रियायाः वैशिष्टयेन तक्षण-परिव्रजनक्रियानुसारमेव तयोः नामकरणमभूत्। निष्पन्नस्य नाम्नः आधारे वस्तुनः क्रियायाः परीक्षणं विचारो वाऽसङ्गतो न भवति। एतत् कारणम्, नाम्नो निष्पत्तावपि तस्य योगार्थस्य परीक्षणं भविष्यति, तथाहि 'भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः' इति निरुक्ते १।१४। नाम्न्यनिष्पन्ने सति कस्यार्थपरीक्षणं भविष्यति ? अत्राह—'प्रथनात् पृथिवी' विस्तृतत्वात् पृथिव्या इदं नाम विद्यते। शाकटायनस्यास्यां व्याख्यायां गार्ग्यस्यैतत् कथनं नितान्तम-

युक्तिकमस्ति यत्—एतत् केन विस्तृतमथवा कस्मिन् आधारे स्थितेन जनेन एतद् विस्तृतम्। एतत्सवं तर्कहीनमस्ति। यतो हि पृथ्व्याः पृथुत्वन्तु प्रत्यक्षदृष्टमस्ति। अस्य प्रथनस्य विषये प्रश्न एव व्यर्थो विद्यते। अतः गार्ग्यस्येयमप्यापत्तिः सुसङ्गता नास्ति।

शाकटायनेन पदानां निरुक्त्यै एकस्याभिन्नपदस्य व्याख्याऽनेकेषां धातूनां योगेन निष्पादिता। अपरञ्च शाकटायनेन 'सत्य'शब्दः प्रकारद्वयेण सिद्धयति। प्रथमन्तावत्—सति+यत् (तद्धितान्तः), द्वितीयं—सन्तम्+एति+अच् (कृदन्तः)। अर्थात् यद्विद्यमानस्यार्थस्य (यथार्थस्य) ज्ञानं करोति तदेव सत्यमस्ति। अस्मिन् विषये गार्ग्यस्य महत्यापत्तिर्विद्यते। यास्कस्योत्तरमस्ति यत्—शब्दान् त्रोटितेऽपि मर्दितेऽपि विखण्डितेऽपि च शाकटायनस्य निरुक्तिः अनुगतार्था विद्यतेऽतोऽमान्या न। अनन्वितेऽर्थे शब्दस्य संस्कारकः पुरुषः निन्दनीयो भवति न तु शास्त्रं तथा चोक्तं—'सैषा पुरुषगर्हा न शास्त्रगर्हा। निरुक्तेस्तथापदस्यान्वयत्वमेव न्याय्यमस्ति। तदर्थं पदविभाजनमनुचितं नास्ति। ब्राह्मणग्रन्थेष्वयं निरुक्तिक्रमः स्वीकृतः। न तु गर्हणीयः क्रमः। शतपथब्राह्मणेन 'हृदय'शब्दं त्रिषु भागेषु विभज्य तेषां निरुक्तिः क्रमशः हृ, दा, इण् धातुभ्यः प्रदर्शितः। फलतः शाकटायनस्य मतं यथार्थमस्ति।

परभाविन्या क्रियया पूर्वजातवस्तूनां नामकरणं समुचितं नास्ति। गार्ग्यस्येयमापत्तिरप्यकिञ्चित्करी विद्यते। लोके परभाविन्या क्रियया पूर्वजातवस्तुनः संज्ञा व्यपदेशो वाऽनेकत्र दरीदृश्यते। भविष्यद्योगस्य सम्बन्धस्य वा सहयोगमवाप्य कस्यापि जनस्य 'बिल्वाद' तथा च 'लम्बचूडक' नामकरणं लोके भवति। मीमांसादर्शनस्याप्ययमेव सिद्धान्तः। रूढशब्दानामपि व्युत्पत्तिकरणमनावश्यकं भवति; इत्येतद् कथनमपि समुचितं नास्ति। वेदे रूढशब्दानां व्युत्पत्तिरनेकत्र दृष्टिगोचरी भवति—यदर्पत तत् सर्पिः। सर्पिषः (घृतस्य) व्युत्पत्तिः गमनार्थंकस्य सृप् धातोः निष्पन्ना भवति।

तदित्थं यास्केन विविधप्रपञ्चितयुक्तिव्यूहेन स्पष्टतः प्रतिपादितं यत्—समस्तानि नामानि धातुजानि सन्ति, वर्तमानस्य भाषाशास्त्रस्य चायमेव मान्यः सिद्धान्तो विद्यते।

## निरुक्त-व्याकरणयोः सामञ्जस्यम्

निरुक्तप्रणेत्रा यास्काचार्येण निरुक्तस्य प्रथमाध्याये कथितं यत्—'तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यम्'। अस्मात् कारणात् एव वेदानां सम्यग् ज्ञानायाध्ययनाय च निरुक्त-व्याकरणयोरुभयोरपि साहचर्यरूपेणावश्यकता भवति। एतदेवकारणमस्ति यदुभयोरेव वेदाङ्गता सिद्धयति। वस्तुतो निरुक्तव्याकरणे परस्परं सम्पूरके स्तः। व्याकरणस्य मुख्यं प्रयोजनमस्ति—शब्दानां शुद्धीकरणम्। तैत्तिरीयसंहितायामेतस्मिन् विषये उक्तमस्ति यत्—'वाग्वै पराची अव्याकृता अवदत्, ते देवा इन्द्रमब्रुवन् इमां नो वाचं व्याकुर्विति······तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुत्पद्यते'। आचार्यैः व्याकरणस्य द्विविधं प्रयोजनमुक्तम्। तत्र बाह्यप्रयोजने शब्दानां व्युत्पत्ति-लिङ्ग-वचन-कारकादीनां परिष्करणं समायाति। अन्तरंग-

प्रयोजनन्तु सुप्रसिद्धमेव । तथा चोक्तं पतञ्जलिना 'रक्षोहागमलघ्वसन्देहाः प्रयोजनानि' व्याकरणस्येति ।

निरुक्तञ्च पूर्वोक्तानि कार्याणि तु सम्पादयत्येवापि तु व्याकरणापेक्षया शब्दार्थ-विवेचनस्यापि कार्यं विदधाति । एवञ्च निरुक्तं साधितशब्दानां धातूनां कामपि कल्पनां विधाय मौलिकार्थान्वेषणाय सततं प्रयत्नमाचरति । अपि च शब्दस्यार्थस्य च पारस्परिकोऽन्योन्याश्रयसम्बन्धाभावात् द्वयोरैक्यं सम्भवति । विशेषतोऽर्थज्ञानाय निरुक्तं परमापेक्षितं भवति, तद्विनाऽर्थज्ञानन्तु अनिश्चितमेव । अपरञ्च निरुक्तेन धातुपाठ-स्याखिला अर्थाः समुत्पद्यन्ते । परञ्च धातूनां परिज्ञानाय निरुक्तमपि व्याकरणाधीनं भवति । अस्मिन् विषये यास्कस्य कथनमस्ति—'न संस्कारमाद्रियेत । विशवत्यो हि वृत्तयो भवन्ति' । इत्येतद् ।

अन्यच्च इतिहासविदां विदुषां कथनमस्ति यत्—यास्काचार्यस्य काले वैया-करणानां महत्संघटनमासीत्, तेषु शाकटायन-गार्ग्य-गालव-शाकल्यादय प्रमुखाः सन्ति । महामुनिना पाणिनिनाप्यष्टाध्यायां सूत्रेषु तेषां मतानामुद्धरणं कृतम् । इत्येव नहि पाणिनिः यास्काचार्यस्य पदानि विभिन्नस्थानेषु स्वीचकार । तथैव यास्काचार्योऽपि वैयाकरणसम्मतपदभेदं स्वीकृत्य निरुक्ते चतुर्विधान् नामाख्यातोपसर्गनिपाताख्यान् स्वीचकार । अत्र परवर्तिकालिकः पाणिनिः पदानां भेदद्वयमेव 'सुप्तिङन्तं पद'मिति सूत्रेऽङ्गी चकार ।

एतदतिरिक्तं यास्काचार्यः व्याकरणस्य पारिभाषिकशब्दानां व्युत्पत्तिविषयकं निर्वचनमपि करोति । कानिचिदुदाहरणानि यथा—'सर्वनाम्नः = सर्वाणि नामानि यस्य, सर्वेषु भूतेषु नमति = गच्छति वा । निपातस्य च—'उच्चावचेष्वर्थेषु निपतन्ति' इति । यास्काचार्यो यथा निरुक्ते व्याकरणशास्त्रस्य पारिभाषिकशब्दानां प्रयोगं साफल्येन प्रयुङ्क्ते तथैव शेषावतारः पतञ्जलिरपि महाभाष्ये निरुक्तसामग्र्याः स्थाने स्थाने सम्यगुपयोगं कृत्वा सामञ्जस्यभावं स्थापयति ।

तथा च कानिचिदुद्धरणानि यथा—( १ ) षड्विकारा भवन्तीत्याह भगवान् वार्ष्यायणिः । ( २ ) उतत्वः पश्यन्तददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् । ( ३ ) नाम खल्वपि धातुजम्—एवमाहुर्नैरुक्ताः । ( ४ ) शवतिर्गतिकर्मा काम्बोजेष्वेव भाषितो भवति । ( ५ ) सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रमत । ( ६ ) चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । ( ७ ) चत्वारि वाक् परिमिता पदानि ।

अपि च निरुक्तस्य व्युत्पत्तेर्निदानमपि व्याकरणशास्त्रमेवास्ति । यच्च निरुक्ते स्फोटसिद्धान्तस्य चर्चा विद्यते तत्रापि व्याकरणस्यैव प्रभावो लक्ष्यते ।

उपर्युक्तेन विवेचनेनेदं सुस्पष्टं भवति यन्निरुक्त-व्याकरणयोर्पूरकत्वं सामञ्जस्य-करत्वं च विद्यते ।

---

# छन्दः

## ( छन्दः पादौ तु वेदस्य )

छन्दो वेदस्य पञ्चममङ्गमस्ति। पाणिनीयशिक्षायां कथितमस्ति यत् 'छन्दः पादौ तु वेदस्य' यथा कोऽपि मनुष्यः पादाभ्यां प्रचलति तद्वत् वेदपुरुषस्य पादौ छन्दांसि। पादेन हीनो जनः खञ्जः कथ्यते तथैव छन्दोभ्यो हीनो वेदपुरुषः खञ्ज एव। अतो वेदाध्ययने छन्दसां ज्ञानमावश्यकं भवति। वेदमन्त्राणामुच्चारणस्य निमित्तं छन्दसां ज्ञानमत्यावश्यकमस्ति। छन्दसां ज्ञानं विना मन्त्राणामुच्चारणं पाठश्च समुचितरीत्या न भवति। प्रत्येकस्मिन् सूक्ते देवतायाः, ऋषेः, छन्दसश्च ज्ञानमावश्यकं भवति। कात्यायनस्येदं सुस्पष्टं कथनमस्ति यत्—यो वेदपाठको याजको वा जनः छन्दसः, ऋषेः, देवतायाश्च ज्ञानेन हीनः सन् मन्त्रस्याध्ययनं, अध्यापनं, यजनं वा करोति कारयति वा, तस्येदं प्रत्येकं कार्यं निष्फलमेव भवति। तथा चोक्तं सर्वानुक्रमण्यां १।१ स्थले—'यो ह वा अविदितार्षेयच्छन्दो-दैवत-ब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणुं वर्च्छति गर्ते वा पात्यते या पापीयान् भवति' इति।

मुख्यच्छन्दसां नामानि संहितायां ब्राह्मणग्रन्थेषु चोपलब्धानि भवन्ति। येन प्रतीयते यत्—अस्याङ्गस्योत्पत्तिः वैदिके युगे एवाभूत्। अस्य पंचमवेदाङ्गस्याधारग्रन्थोऽस्ति पिङ्गलाचार्यकृतं छन्दःसूत्रम्। अस्य महनीयस्य ग्रन्थस्य रचयिता पिङ्गलः कदा बभूवेत्यस्य पर्याप्तः परिचयो न मिलति। अयं ग्रन्थः सूत्ररूपे विद्यते, अष्टाध्यायेषु च विभक्तोऽस्ति। प्रारम्भात् चतुर्थाध्यायस्य सप्तमसूत्रपर्यन्तं वैदिकच्छन्दसां लक्षणानि सन्ति। तदनन्तरं लौकिकच्छन्दसां वर्णनमस्ति। अस्योपरि भट्टहलायुधकृता 'मृत सञ्जीवनी' नाम्नीव्याख्या सुप्रसिद्धा विद्यते। अस्य प्रकाशनमनेकस्थानेभ्योऽभूत्।

प्रचलितेषु लौकिककाव्येषु च्छन्दसः पादबद्धतायाश्च सम्बन्धस्तथा घनिष्ठो विद्यते यत्—पद्येष्वेव छन्दसां योजना भवति, गद्यञ्च छन्दोविरहितं भवति। वैदिकच्छन्दसः विषये इयं धारणा नितान्तं भ्रान्ता विद्यते। प्राचीनार्षपरम्परानुसारं गद्यमपि छन्दोयुक्तं स्वीक्रियते। दुर्गाचार्येण निरुक्तस्य वृत्तौ कस्यापि ब्राह्मणस्य वाक्यं समुद्धृतम्, यस्याशयोऽस्ति छन्दसा विना वाणी-उच्चरिता न भवति—'नाच्छन्दसि वागुच्चरति' इति। भरतमुनयोऽपि छन्दसा विरहितं शब्दं न स्वीकुर्वन्ति। तथा च तत्र निर्दिष्टं यत्—'छन्दहीनो न शब्दोऽस्ति, न छन्दः शब्दवर्जितम्' इति। अपरश्च कात्यायनमुनेः नाम्ना प्रख्यातं 'ऋग्यजुष परिशिष्टम्'—पूर्वोक्ततथ्यस्य समर्थनं करोति, तद्यथा—

छन्दोभूतमिदं सर्वं वाङ्मयं स्याद् विजानतः।
नाच्छन्दसि न चापृष्टे शब्दश्चरति कश्चन॥

एषां समुद्धृतानां मतानामनुसारेण वेदस्यैतादृशः कोऽपि मन्त्रो नास्ति यः छन्दसां माध्यमेन निर्मितो न भवेत्। फलतो यजुर्वेदस्य मन्त्रा अपि ये निश्चयेन गद्यात्मकाः

सन्ति—छन्दोभिस्ते विरहिताः न सन्ति । अतएव प्राचीनाचार्यैः १ अक्षरादारभ्य १०४ अक्षरपर्यन्तं छन्दसां विधानं स्वग्रन्थेषु कृतम् ।

ऋग्वेद-सामवेदयोः समस्ताः मन्त्राः छन्दोबद्धाः ऋचः सन्ति । हृदयस्य कोमल भावानामभिव्यक्तेर्नैसर्गिकानि माध्यमानि छन्दांस्येव सन्ति । हृदि स्थितान् आन्तरिकान् मर्मस्पर्शिनो भावान् प्रकटीकरणाय कवयः छन्दसां कमनीयं कलेवरमेवान्वेषयन्ति । मन्त्राणां प्रधानमुद्देश्यं यज्ञेषु उपासनीयस्य देवस्य प्रसादनकार्यमेवास्ति, एतच्चापि निश्चयेन कथनीयमस्ति यत्—देवानां प्रसादनस्य मुख्यं साधनं मन्त्राणां सस्वरं गायनमेव भविष्यति । अनया दृष्टया अपि छन्दसां महत्ता निर्विवादाऽस्ति । कस्यापि मन्त्रस्य फलवत्ता तदैव भविष्यति यदा तस्य मन्त्रस्य द्रष्ट्रा ऋषिणा वर्णितेन देवेन च सह वयं तच्छन्दसापि परिचिताः स्मः । अतो मन्त्राणां छन्दोभिः सह परिचयस्थापनमेकं सविशेषमावश्यकं कार्यमस्ति । अपरञ्च व्याकरणे दश लकाराणां विधाने पञ्चमो लेट् लकारः 'छन्दोमात्रगोचरः' 'छन्दस्' शब्दोऽत्र वेदवाचकः । वेद-छन्दसोः पर्यायवाचकत्वं विद्यते ।

सुप्रसिद्धेन प्राच्यभाषावैज्ञानिकेन यास्केन 'छन्दः' इत्यस्य व्युत्पत्तिः 'छद्' धातुना विज्ञापितः । छन्दांसि 'छन्दः' इति कथनस्य रहस्यमिदमेवास्ति यत्—एतानि छन्दांसि वेदानामावरणानि सन्ति । आवरणसाधनानि सन्ति । निरुक्ते तेन कथितं यत्—'छन्दांसि छादनात्' इति । अस्यैवार्थस्य पुष्टौ श्रीमता दुर्गाचार्येणैतद् सारगर्भितं वाक्यं समुद्धृतम्—'यदेभिरात्मानमाच्छादयन् देवा मृत्योर्बिभ्यतः तच्छन्दसा छन्दस्त्वम्' । पश्चात्काले वेदाय छन्दसः प्रयोग उपचारवशात् भवतिस्म । वेदानां बाह्यरूपं छन्दोबद्धत्वात्—एष गौणप्रयोगोऽवान्तरकाले प्रचलितः । पाणिनिना संभाषणस्य भाषायै यत्र 'भाषा' शब्दस्य प्रयोगः कृतस्तत्रैव सूत्रेषु वैदिकभाषायै छन्दस्' इत्यस्य प्रयोगो विहितः । लौकिकसंस्कृतस्य दृष्टया वैदिकसंस्कृतस्य शब्दरूपेषु छन्दसु च नियमस्य सामान्याभावो विद्यते । अतश्छान्दस'शब्दस्यार्थ एव समभवत्—अनिश्चितः, अनियमतः अस्यैवार्थे चायं शब्दः साम्प्रतं बहुधा प्रयुक्तो भवति ।

## वैदिकच्छन्दांसि

वैदिकच्छन्दसामिदमेव वैशिष्टयं विद्यते यत्—एतान्यक्षरगणनायां नियतानि सन्ति, अर्थात् तेष्वक्षराणां गुरोः लघोः क्रमस्य न कोऽपि विशेषो नियमो विद्यते । अत एव कात्यायनेन 'सर्वानुक्रमण्यां' एतल्लक्षणं 'यदक्षरपरिमाणं तच्छन्दः' कृतमस्ति । परञ्च लौकिकसंस्कृतस्य छन्दःसु नैव नियमो वरीवर्ति । तत्र तु वृत्तस्थानामक्षराणां गुरुता लघुता च नियता विद्यते । एतदपि स्मर्तव्यं यत्—अनेकशताब्दीनामनन्तरं वैदिकच्छन्दोभ्य एव लौकिकच्छन्दसामाविर्भावो बभूव । लौकिकेषु छन्दस्सु चत्वारः पादाः भवन्ति, परञ्च वैदिकेषु छन्दस्सु नैष नियमो विद्यते ।

प्राच्यभारतीयाचार्याणां मतानुसारं वैदिकच्छन्दसां लक्षणनिर्धारणेऽस्य विषयस्य सविशेषं महत्त्वं नास्ति यदेषु कोऽक्षरो लघुः कश्च गुरुर्विद्यते । परञ्चाचार्यशौनकेन

'ऋक्प्रातिशाख्ये'ऽस्य विषयस्य विचारः प्रस्तुतः। तेषां महत्त्वपूर्णं कथनमस्ति यदष्टाक्षराणां पादे ( गायत्रे ) द्वादशाक्षराणां पादे ( जागते ) उपोत्तमाक्षरो लघुर्भवति। दशाक्षराणां पादे ( वैराजे ) एकादशाक्षराणां पादे ( त्रैष्टुभे ) चोपात्तमोऽक्षरो गुरुर्भवति। एतद् 'वृत्त'मुदीर्यते। शौनकस्यैतद् कथनं ऋग्वेदीय-च्छन्दस्सु सुसंगतं भवति। पाश्चात्यैर्विद्वद्भिरप्येतादृशानां तथ्यानामाविष्कारः स्वानुशीलनबलेन कृतः।

प्रत्येकस्याः संहितायाश्छन्दसां वर्णनमनुक्रमणीषु-अतिसूक्ष्मतया कृतमस्ति। कात्यायनेन ऋग्वेदस्य प्रत्येकस्य मन्त्रस्य छन्दसां निर्देशः 'सर्वानुक्रमण्यां महत्प्रामाण्येन कृतः। प्रातिशाख्येषु, विशेषतः ऋक्प्रातिशाख्ये छन्दसां विस्तृतं विवेचनमस्ति। अपि च पिङ्गलस्य ग्रन्थे वैदिक-लौकिकच्छन्दसां सविशेषं वर्णनमस्ति। इमे ग्रन्थाः छन्दसां परिज्ञानाय विशेषरूपेणादरणीयाः सन्ति।

इति तु पूर्वमेव प्रतिपादितं यत्—वैदिकेषु छन्दस्सु अक्षराणां गौरव-लाघवयोरुपरिध्यानमप्रदाय तेषां संख्याया उपर्येव विचारः क्रियते। कदाचिदन्यपादानामक्षराणां समसंख्यके स्थितेऽपि—एकस्मिन् पादे कदाचित् संख्या न्यूना भवति कदाचिच्चाधिका। सेयं स्वाभिमताऽनियमितता नास्ति, अपि तु नियमेनैव क्रियते। एकस्य द्व्यक्षरयोर्वा अधिकतया न्यूनतया वा छन्दः परिवर्तितं न भवति। तेन तत्स्वरूपस्य हानिर्न भवति। यदि कस्यापि छन्दसोऽक्षरमेकं न्यूनं भवेत्तदा तं 'निचत्' इति विशेषणेन संयोजयन्ति, एकमधिकं भवेच्चेत् तं 'भुरिक्' विशेषणेन योजयन्ति। नियमतस्त्रिपदाया अष्टाक्षरायाः गायत्र्या अक्षराणां संख्या चतुर्विंशत्येव भवति, परञ्च त्रयोविंशत्यक्षराणां गायत्री 'निचद् गायत्री' पञ्चविंशत्यक्षराणाञ्च 'भुरिग् गायत्री कथ्यते। अनेनैव प्रकारेण द्व्यक्षरविरहिते छन्दसि 'विराट्' द्व्यक्षराधिक्ये च 'स्वराट्' इति विशेषणेन योजयन्ति। अत्रैतद् स्मर्त्तव्यं यत् 'विराट् गायत्री' द्वाविंशत्यक्षराणां 'स्वराट् गायत्री' च षड्विंशत्यक्षराणां भवति। तथा चोक्तं सर्वानुक्रमण्याम्—

'ऊनाधिकेनैकेन निचृद्-भुरिजौ। द्वाभ्यां विराट् स्वराजौ'।

अन्यच्च—ऋक् प्रातिशाख्ये, तथैव—

'एकद्व्यूनाधिका सैव निचृद् ऊनाधिकाभुरिक्' इति।

यदा कदा अवलोकने समायाति यत्—छन्दः एकस्याक्षरस्याभावेन खञ्जमिव ( पादेन हीनम् ) प्रतीयते। अस्यामवस्थायाँ छन्दः नियमाबद्धं कर्तुमित्यभिप्रायेण एकमेवाक्षरं द्व्यक्षरविधानस्य व्यवस्था 'सर्वानुक्रमण्यां' सुस्पष्टरूपेण प्रदत्ता विद्यते। यस्याः पारिभाषिकशब्दः 'व्यूहन'मस्ति। एतस्य सूत्रमस्ति—'पादपूरणार्थं क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत्' अर्थात् पादपूरणार्थं क्षैप्रसंयोगं ( यकार-वकारयोः संयोगं ) तथा च—सन्धिजन्यैकाक्षराणां पृथग्भावेन कर्त्तव्यम्। तथोदाहरणानि कानिचित्—

( १ ) यस्मिन् स्थाने 'यण्' सन्धिना ( सन्धिद्वारेण ) यकारोऽथवा वकारो भवेत् तत्र तं पृथक्कृत्य मूलाक्षरयोरुच्चारणं विधेयमिति, यथा—'त्रिपदा उष्णिक्' इत्यस्योदाहरणे प्रदत्तमन्त्रस्य द्वितीयचरणे 'पिबति सौम्यं मधु' इत्यत्र अष्टाक्षरेषु एकस्याक्षरस्य न्यूनता विद्यते। अतः पादपूरणाय—'सौम्यं' इत्यस्य स्थाने 'सौमिअम्'

इत्युच्चारणीयम् । तथैव 'जगती' छन्दसः अन्तिमे चरणे 'द्युमद' इत्यस्य स्थाने 'दिउमद' इति एवमेव 'तत्सवितुर्वरेण्यं' इत्यत्र 'वरेण्यं' इति स्थाने च 'वरेणिअं' इत्युच्चारणीयम् ।

( २ ) वकारस्य पृथक्करणम्—अधिकांशमन्त्रेषु 'त्वं' इत्यस्योच्चारणं 'तुअम्' भवति । तथैव 'क्षिव गच्छ स्वः पते' इत्यत्र 'स्वः' सुअः इति कथनीयम् ।

( ३ ) रेफस्य पृथक्करणम्—अनेकमन्त्रेषु 'इन्द्र' इत्यस्योच्चारणं 'इन्दर' इति भवति, यथा—ऋग्वेदे, त्वं ह त्यदिन्द्रः' इत्यस्योच्चारणं भविष्यति—'तुअं ह त्यदिन्दरः' ।

( ४ ) 'ए' अथवा 'ओ' ( गुणस्य ) एवमेव 'ऐ' 'औ' इति ( वृद्धिस्वरयोः ) द्वयोः स्वरयोः पृथक्करणं भवति । तद्यथा—ज्येष्ठ=ज्ययिष्ठ, धेष्ठ=धयिष्ठ, प्रब्रह्मैत्विति=ब्रह्म एतु इति । एतान्युदाहरणामि ऋग्वेदस्य सप्तममण्डलस्य सन्ति ।

( ५ ) एकार-ओकारयोरनन्तरं लुप्ताकारं ( एङः पदान्तादति ) इत्यस्य पुनः स्थापनं विधायोच्चारणीयम्, यथा—'इन्द्रं वाजेषु नोऽव' इत्यत्र 'नोऽव' नो अव । 'इन्द्रं सखायोऽनु संरभध्वम्' इत्यत्र—अनु इत्यस्योच्चारणेन पूरणीयम् ।

( ६ ) दीर्घसन्धिनोत्पन्नमाकारं द्वयक्षरयोः स्वरूपे परिवर्तनं कृत्वा समुच्चारणीयम् । यथा—ऋग्वेदे, 'वदन् ब्रह्मा वदती वनीयाम्' इत्यत्र 'ब्रह्म अवदतो' । 'आद्याद्याश्वः श्वः' इत्यत्र आद्याद्या=अद्य अद्या, तथा च 'वात' 'व अत' इति परिवर्तनीयम् ।

मुनित्रयेष्वन्यतमेन कात्यायनेन सर्वानुक्रमण्यां ऋग्वेदस्य समस्तानां मन्त्राणां छन्दसाञ्च निर्देशः कृतः । तदनुसारं ऋग्वेदे छन्दसां संख्या—अधोलिखिता वर्तते—गायत्री=२४६७, उष्णिक्=३४१, अनुष्टुप्=८५५, बृहती=१८१, पंक्तिः=३१२, त्रिष्टुप्=४२५३, जगती=१३५८, पूर्णयोगः=९७६७ । अनुमानतः शतत्रयमन्त्राः=अतिजगती, शक्वरी, अतिशक्वरी, अष्टि, अत्यष्टयादिषु विविधे छन्दस्सु निबद्धाः सन्ति । एकपदा—ऋचः षट् ६, नित्यद्विपदा सप्तदशसंख्यकाः सन्ति । इत्थमवलोकनेन सुस्पष्टं भवति यत् ऋग्वेदे त्रिष्टुबितिछन्दो विद्यते । यस्मिन् ऋचां द्विधा निबन्धनं विद्यते ।

## वैदिकच्छन्दसां विभागः

वेदप्रयुक्तेषु छन्दस्सु क्वचित् लघु-गुरु-मात्राणामनुगमनं नास्ति । तत्र केवलमक्षराणामेव गणना भवति । तेन समस्तानि वैदिक छन्दांसि अक्षरेष्वाश्रितानि सन्ति । तत्रभेदद्वयमवधारणीयम् । तत्र प्रथमे केवलमक्षरगणना छन्दस्सु भवति । येषु छन्दस्सु पादविभाजनस्यावश्यकता न भवति, तानि केवलमक्षरगणनानुसारीणि भवन्ति । द्वितीयप्रकारस्य छन्दस्सु अक्षराणां पादेषु नियमतो विभाजनस्य व्यवस्था विद्यते । तथा च तत्र पादेस्थितानामक्षराणां गणनायामाग्रहः, तस्मादिमे पादाक्षरगणनानुसारिणः कथ्यन्ते । अक्षरेणात्र तात्पर्यं स्वरेणास्ति ।

वैदिकच्छन्दसां मुख्यभेदानां विषयेनैकमत्यं तिष्ठति। परञ्च समस्तानां वैदिकच्छन्दसां संख्या षड्विंशति स्वीकृता विद्यते। एषु प्राथमिकानि पञ्च च्छन्दांसि वेदेऽप्रयुक्तानि भवन्ति। तानि परित्यज्यावशिष्टानि च्छन्दांसि वयं त्रिषु सप्तकेषु विभक्तुं शक्नुमः। प्रयुक्तेषु छन्दस्सु 'गायत्री' प्रथमं छन्दः, यस्य प्रत्येकस्मिन् पादे षडक्षराणि भवन्ति। एतदर्थं प्रथमः सप्तकः गायत्र्याः प्रारभ्यते। एतत्पूर्वकानि पञ्च च्छन्दांसि 'गायत्रीपूर्वपञ्चकस्येति नाम्ना विख्यातानि सन्ति। तथा च तेषां नामानि स्वरूपतो यथा—गायत्रीपूर्वकपञ्च च्छन्दसां नामानि—

१. मा ( अक्षराणां संख्या ४ ), २. प्रमा ( अष्टाक्षराणां समूहः ), ३. प्रतिमा ( द्वादशाक्षराणि ), ४. उपमा ( षोडशाक्षराणि ), ५. समा ( त्रिंशदक्षराणि )। एतानि नामानि ऋक्प्रातिशख्यानुसारीणि सन्ति। अन्येषु ग्रन्थेषु तु एतद्भिन्नानि नामानि सन्ति—यथा भरतस्य नाटचशास्त्रे-क्रमानुसारेण-उक्त, अत्युक्त, मध्यम, प्रतिष्ठा, सुप्रतिष्ठा चेति।

( क ) प्रथमसप्तकस्य सप्त च्छन्दसां नामानि तुल्यानि सन्ति। तानि च यथा—गायत्री ( चतुर्विंशत्यक्षरान्विता ), उष्णिक् ( अष्टादशाक्षरयुता ), अनुष्टुप् ( ३२ अ० ), बृहती ( ३६ अ० ), पंक्ति ( ४० अ० ), त्रिष्टुप् ( ४४ अ० ), जगती च ( अष्टचत्वारिंशत् अक्षरसमन्विता )।

( ख ) द्वितीयसप्तकस्य सप्त च्छन्दांसि 'अतिच्छन्दसः' नाम्ना प्रख्यातानि सन्ति। एषामक्षरसंख्या पूर्वापेक्षया चतस्रोऽधिका भवति।

तत्र प्रथम-सप्तकस्य च्छन्दसां प्रयोगः देवानां स्तुत्यवसरे क्रियते।

अतएवैतानि च्छन्दांसि 'दिव्य' इति नाम्ना गीयन्ते। द्वितीये सप्तके च मानवानां स्तुतिषु प्रयुक्तानि भवन्त्यतो मानवनाम्ना ख्यातिं लभन्ते।

अपरञ्च—दिव्य-मनुष्ययोरुभयोः प्रकारयोर्जनेभ्यः प्रयुक्तत्वात् तृतीयः सप्तकः दिव्यमानुषयोर्नाम्ना सुविदितोऽस्ति।

लौकिकसंस्कृतस्य च्छन्दसां विकासोऽप्येभिर्वैदिकैश्छन्दोभिरभवत्। संस्कृतस्य कविभिः श्रुतिमाधुर्यं संगीतमयमारोहावरोहं मनसि निधाय एषां छन्दसामक्षराणां गौरवं लाघवं च दृष्ट्वा नियमितं कृतं छन्दः। अन्येषां लौकिकच्छन्दसामाविर्भाविकाणां नामानि तु लुप्तान्यभवन्, परञ्चानुष्टुप् छन्दसः प्रणेतुर्महर्षे वाल्मीकेः कथा अद्यापि सुप्रद्धिा श्रूयते च व्याधबाणविद्धं क्रौञ्चमवलोक्य केनप्रकारेण कथं वा महर्षेः हृद्गतः शोकः श्लोकरूपे परिणत इति कथनस्यावश्यकताऽत्र न प्रतीयते। तथा च—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥

अन्यच्च—श्लोकत्वमापद्यत यस्य शोकः। ( रघु० १४।७० )

वैदिक त्रिष्टुप्छन्दसैव—एकादशाक्षरच्छन्दसां विशेषतः इन्द्रवज्रोपेन्द्रवज्रयोः समुत्पत्तिरुदयोवाऽभवत्। एवमेव जगत्या द्वादशाक्षरयुक्तानां छन्दसां वंशस्थादीनां

तथा च सामगानामतिप्रियया शक्वर्या वसन्ततिलकायाः समुत्पत्तिर्बभूवेति । अनेनैव-प्रकारेणान्येषां छन्दसामुत्पत्तिः उदयो वा ज्ञातव्या ।

## छन्दसां शास्त्रीयं भेदोपभेदविवरणम्

प्रथमसप्तकस्य निर्दिष्टानां छन्दसां भेदाः केवलमक्षरसंख्यानानुसारिषु छन्दस्सुं प्राप्यन्ते । इमेऽष्टविधाः भवन्ति भेदाः । तद्यथा—दैव-असुर-प्राजापत्य-आर्ष-याजुष-साम्न-आर्चब्राह्म च इत्येते भेदाः सन्ति च्छन्दसाम् । एष्वष्टसु च्छन्दस्सु अपि द्वौ चतुष्कौ स्तः—प्रथमतः चतुर्ण्णा छन्दसां प्रथमश्चतुष्कश्चान्तिमानां चतुर्ण्णां छन्दसां द्वितीयश्चतुष्कः । अत्र ध्यातव्यमस्ति यत्—प्रथमचतुष्कस्य दैव-आसुर-प्राजापत्य एषां त्रयाणां छन्दसां यावन्त्यक्षराणि भवन्ति तावन्त्येवाक्षराणि—आर्षच्छन्दसि भवन्ति, यद्धि अस्य चतुष्कस्यान्तिमं छन्दः विद्यते । अनेनैव प्रकारेण द्वितीयस्य चतुष्कस्य याजुष, साम्न आर्चं छन्दसां चाक्षराणां सम्मिलिता संख्या-अस्य चतुष्कस्यान्तिमे छन्दसि ब्राह्मे उपलब्धा भवति । एकमुदाहरणमत्र पश्यन्तु—गायत्री छन्दसः एष्वष्टसु भेदेषु दृष्टिपातं कुर्वन्ति । गायत्र्याः दैव-आसुर-प्राजापत्यभेदेषु क्रमशः १, १५ तथा ८ अक्षराणि भवन्ति, तथा चैषां सम्मिलिता संख्या आर्षगायत्र्यां भवति । अनेनैव प्रकारेण गायत्र्याः याजुष-साम्न-आर्चभेदेषु च क्रमशः ६, १२, १८ अक्षराणि भवन्ति येषां सम्मिलिता संख्या ३६ अक्षराणां ब्राह्मी गायत्र्यामुपलब्धा भवति । एषु सर्वेषु आर्षप्रकार एव वेदेषु सर्वतोऽधिकः प्रधानः बहुशश्च प्रयुक्तश्चर्चितश्च प्राप्यते । अधुना ऋक्षु प्रयुक्तानां छन्दसां संक्षेपतमं विवरणमुपस्थाप्यते इति तु सर्वे विद्वांसः जानन्ति यत् ऋचः पादबद्धाः भवन्ति । अतः एषु पादबद्धाक्षराणां गणना भवति । आर्षच्छन्दस एव भेदोपभेदानां वर्णनं शास्त्रेषूपलभ्यते ।

( १ ) **गायत्री**—अस्मिन् छन्दसि प्रमुखतया त्रयः पादा भवन्ति परश्चात्र एकस्मादारभ्य पञ्चपादपर्यंन्तमवलोक्यन्ते । परिणामतः इयं गायत्री—एक पदा, द्विपदा, त्रिपदा, चतुष्पदायाश्च रूपे ऋग्वेदे समुपलब्धाभवति । परञ्च मुख्यतया त्रिपदायाः गायत्र्याः प्राचुर्यमस्ति । अस्याः गायत्र्याः मुख्यभेदाः सन्ति—( क ) त्रिषु पादेषु एकैकाक्षरस्य न्यूनतायां सा 'पादनिचृत्' गायत्री कथ्यते । ( ख ) यदा त्रयो पादाः क्रमेण एकाक्षरेण वर्द्धमाना भवेयुः तदा सा वर्धमाना गायत्री कथ्यते । ( ग ) एतद्विपरीता पादाक्षरागायत्री—प्रतिष्ठा गायत्री नाम्न्या प्रख्याता विद्यते । ( घ ) यदा च पादानामक्षराणि क्रमशः सप्त + दश + सप्त = चतुर्विंशत्यक्षराणि भवेयुस्तदा सा यवमध्या गायत्री निगद्यते । ( ङ ) यवमध्यातः विपरीता पादाक्षरसमन्विता ( ९ + ६ + = २४ ) गायत्री पिपीलिकामध्या प्रकीर्तिता विद्यते ।

( २ ) **उष्णिक्**—अस्मिन् छन्दसि अष्टविंशत्यक्षराणि प्रायशश्च त्रयः पादाः भवन्ति । गायत्र्या अस्मिन् चतुर्ण्णामक्षराणामाधिक्यं विद्यते । तेषां परिवर्द्धितानामक्षराणां पादालोचनेनास्य छन्दसोऽनेके भेदाः भवन्ति । ( अ ) **पुरउष्णिक्**—प्रथमे पादे द्वादशाक्षराणि, अन्तिमेषु पादेषु चाष्टौ—अष्टौ । ( आ ) **ककुबुष्णिक्**—मध्यपादे द्वादश आदावन्ते चाष्टावष्टौ । ( इ ) **परोष्णिक्** वा **उष्णिक्**—अवसाने द्वादशा-

क्षराणि प्रारम्भस्य चाष्टावष्टौ। ( ई ) **पिपीलिकामध्या उष्णिक्**—पादेषु क्रमशः एकादश + षड् + एकादश ( = अष्टाविंशति ) अक्षराणां सत्ता भवति ।

( ३ ) **अनुष्टुप**—अस्मिन् लघुकाये छन्दसि—अक्षराणां संख्या द्वात्रिंशदस्ति तथा च प्रधानतया चत्वारः पादाः भवन्ति । परञ्च—त्रिपादानुष्टुभामपि विशिष्टा संख्या विद्यते । एषामनेके भेदप्रभेदाः सन्ति । ( क ) **विराड् अनुष्टुप्**—त्रिषु पादेषु-अक्षर संख्या क्रमेण दश + दश + दश = त्रिंशदक्षराणि । ( ख ) **विराट् अनुष्टुप्**—त्रिषु पादेषु—अक्षरसंख्या प्रत्येकस्मिन् एकादशाक्षराणि भवन्ति । ( ग ) चतुष्पाद् अनुष्टुप्—प्रत्येकस्मिन् पादे अष्टावष्टाक्षराणि भवन्ति ।

( ४ ) **बृहती**—अस्मिन् छन्दसि—अक्षराणां संख्या षड्त्रिंशत् पादाश्च चत्वारो भवन्ति । अस्य प्रधानभेदाः सन्ति—( क ) **पुरस्ताद् बृहती**—अस्मिन् पादेष्वक्षराणां संख्या क्रमशः द्वादश + अष्टौ + अष्टौ + अष्टौ = षट्त्रिंशत् भवन्ति । ( ख ) **उरो बृहती**—अथवा स्कन्धोग्रीवी न्यङ्कुसारिणी वा = द्वितीये पादे द्वादक्षराणां शेषपादेष्वष्टावष्टावक्षराणि भवन्ति । ( ग ) **पथ्याबृहती**—तृतीये पादे द्वादशाक्षराणि, अन्येषु त्रिषु चाष्टावष्टावक्षराणि भवन्ति । ( घ ) **उपरिष्टात् बृहती**—अस्मिन् छन्दस्यन्तिमः पादः द्वादशाक्षराणां, शेषपादेषु चाष्टावष्टावक्षराणि भवन्ति । ( ङ ) **सतोबृहती-महाबृहती**—त्रिषु पादेषु प्रत्येकस्मिन् पादे द्वादशाक्षराणि भवन्ति । ऋक्सर्वानुक्रमण्यामेतत् छन्दः 'ऊर्ध्वबृहती' इति संज्ञया विनिर्दिष्टमस्ति ।

( ५ ) **पंक्ति**—बृहत्त्यपेक्षया चतुर्णामक्षराणां वृद्धया पंक्तिश्छन्दसः रचना भवति । एतच्च चत्वारिंशदक्षराणां भवति । अस्मिन् विशेषतश्चत्वारः पादाः भवन्ति । पञ्चपादात्मिका पंक्तिरतिस्वल्पा भवति । अस्याः भेदेषु केचन महत्त्वपूर्णाः भेदास्सन्ति । तद्यथा—**विराट्पंक्तिः**—दश-दशाक्षराणां चत्वारो पादाः भवन्ति । **सतो बृहतीपंक्तिः**—चतुर्षु पादेष्वक्षराणां संख्या क्रमशः १२ + ८ + १२ + ८ = ४० अक्षराणि समस्तानि भवन्ति । **विपरीतापंक्तिः**—यस्मिन् पूर्वलक्षणस्य वैपरीत्यं तिष्ठति । तद्यथा—८ + १२ + ८ + १२ = ४० एवं क्रमेण । **आस्तारपंक्तिः**—यस्मिन् छन्दसि ८ + ८ + १२ + १२ अक्षराणां सत्ता क्रमशः पादेषु भवति । अपरञ्च पूर्वतः विपरीतावस्थायां यत्र द्वादश + दश + अष्ट + अष्ट = अष्टत्रिंशदक्षराणां सत्ता भवति, तत् '**प्रस्तार-पंक्तिश्छन्दः**' कथ्यते । **संस्तारपंक्तिः**—यस्मिन् छन्दसि क्रमशः १२ + ८ + १२ = ४० चत्वारिंशदक्षराणां पादाः स्युः । **विष्टारपंक्तिः**—यत्र ८ + १२ + १२ + ८ अक्षराणां क्रमशः पादाः स्युस्तत्र विष्टारपंक्तिर्भवति । **पथ्यापंक्तिः**—अथवा **केवलं पंक्तिः**—यत्राष्टाक्षराणां पञ्चपादाः स्युस्तत्र पथ्यापंक्तिः केवलं पंक्तिर्वा भवति । ऋग्वेदे समस्तमिन्द्रसूक्तं पंक्तावेव निबद्धमस्ति ।

( ६ ) **त्रिष्टुप्**—अस्मिन् छन्दसि चतुश्चत्वारिंशदक्षराणि चत्वारः पादाश्च भवन्ति अस्य छन्दसोऽनेके भेदोपभेदाः भवन्ति । ( क ) **त्रिष्टुप्**—यस्मिन् एकादशाक्षराणां चत्वारः पादाः भवेयुः । ( ख ) **अभिसारिणी**—यस्मिन् छन्दसि १० + १० + १२ + १२ = चत्वारिंदक्षराणि प्रत्येकस्मिन् पादे स्युः । ( ग ) **महाबृहती**—यस्य

च्छन्दसः पञ्चपादेषु क्रमशः १२+८+८+८+८=चतुश्चत्वारिंशदक्षराणि विद्यमानानि स्युः। (घ) **यवमध्यात्रिष्टुप्**—यस्य पञ्चपादेषु क्रमशः ८+८+१२+७+८=चतुश्चत्वारिंशदक्षराणि विद्यमानानि स्युस्तत्र यवमध्या त्रिष्टुप् भवति।

(७) **जगती**—अस्मिन् छन्दसि अष्टचत्वारिंशदक्षराणि चत्वारः पादाश्च भवन्ति। अत्रायमाशयो यत्—प्रत्येकस्मिन् पादे द्वादशाक्षराणि भवन्ति तदेव जगत्याः सामान्यं स्वरूपं विद्यते। अस्य छन्दसोऽनेके भेदाः भवन्ति। तेषु (क) **उपजगती**—यत्र प्रथमतः द्वयोः पादयोः द्वादशाक्षराणि स्युः अन्तिमे च द्वयोः पादयोः एकादशाक्षराणि भवेयुरेतत् 'उपजगती' छन्दः नितरां प्रसिद्धमस्ति। (ख) **महासतोबृहती**—यस्मिन् छन्दसि केऽपि त्रयः पादाः अष्टाष्टाक्षराणां स्युः तथा च द्वौ पादौ द्वादशद्वादशाक्षराणां भवेयुस्तत्रैतत् छन्दः। इयमेव 'पञ्चपदा' जगती इत्यपि कथ्यते। (ग) **महापंक्तिजगती**—यत्र अष्टाष्टाक्षराणां षट् पादाः भवन्ति तत्र महापंक्तिजगती भवति।

द्वितीय-तृतीयसप्तकयोश्छन्दांसि 'अतिछन्दसः' नाम्ना प्रख्याताः सन्ति। आचार्यशौनकस्य वेङ्कटमाधवस्य च कथनानुसारं द्वितीयसप्तकस्यच्छन्दांसि तु ऋग्वेदे विद्यमानानि सन्ति, तृतीयसप्तकस्यच्छन्दसामत्रात्यन्ताभावोऽस्ति। अतएव 'ऋक् सर्वानुक्रमण्यां तृतीयसप्तकस्योल्लेखो न मिलति। अपरञ्च ऋक्प्रातिशाख्ये आचार्यशौनकस्य स्पष्टं कथनमस्ति—सर्वादशतयीष्वेता, उत्तरास्तु सुभेषजे'। अस्यायमाशयः—गायत्र्या आरभ्य-अतिधृतिपर्यन्तं चतुर्दशच्छन्दांसि ऋग्वेदस्य मन्त्रेषु उपलब्धाः भवन्ति तदुत्तरञ्च अग्रिमसप्तकस्य छन्दांसि सुभेषजऋक्षु मिलन्ति। अपि च वेङ्कटमाधवेनापि छन्दोऽनुक्रमण्यामस्य तथ्यस्यावृत्तिर्विहिता। तद्यथा—

'चतुरधिकच्छन्दांसि दर्शितानि चतुर्दश।
यानि दशतयीष्वासन् उत्तराणि सुभेषजे॥

द्वितीयसप्तकस्य छन्दसां निरूपणमधोलिखितानुसारेण विद्यते। तद्यथा—

१. **अतिजगती**—द्विपञ्चाशदक्षराणामस्मिन् छन्दसि पञ्चपादाः भवन्ति। तत्रोदाहरणं यथा—'तमिन्द्रं जोहवीमि मघवानुग्रं' ऋग्वेदे ८।९७।१३ इत्यत्र।

२. **शक्वरी**—षट्पञ्चाशदक्षराणि, सप्तपादाः, उदा० प्रोष्वस्मै० (ऋ० १०। १३३।१)।

३. **अतिशक्वरी**—षष्टयक्षराणि, पञ्चपादाः १६+१६+१२+८+८=६०, उदा०—'सुषुमा यातमद्रिभिः'।

४. **अष्टि**—चतुष्षष्टयक्षराणि, पञ्चपादाः (१६+१६+१६+८+८) उदा० 'त्रिकद्रुकेषुमहिषो यवाशिरं'।

५. **अत्यष्टि**—अष्टषष्टयक्षराणि, सप्तपादाः, उदा०—'अदर्शि गातुरवे वरीयसी'।

६. **धृति**—द्विसप्तत्यक्षराणि, सप्तपादाः, उदा०—'सखे सखायमभ्या०'।

७. षट्सप्तत्यक्षराणि, अष्टौ पादाः, उदा०—'स हि शर्धो न मारुतं०' ऋक्प्राति-

शाख्ये ( १७।४६, ४७ ) ऋग्वेदस्य सर्वाधिकयोः ऋचोः निर्देशो विद्यते । यदि अविकर्षः स्थास्यति—अर्थात् व्यूहे न कृते सति 'अवर्मह इन्द्र' सर्वाधिकं महदृक्भविष्यति यद्धि भाष्यकारस्य उवटस्यानुसारं सप्तत्यक्षरवती विद्यते । विकर्षे ( व्यूहे ) च 'स हि शर्धो न मारुतं' सर्वाधिका महती भविष्यति अथवा उव्वटानुसारं षट्सप्तत्यक्षराणामष्टपादैर्युक्ता ऋचा विद्यते ।

अनेन प्रकारेण संक्षेपेण वैदिकछन्दसां सामान्यं विवरणमुपस्थापितमस्ति । विस्तरेण तु पिङ्गलच्छन्दः सूत्रेऽवलोकनीयमिति ।

---

# ज्यौतिषम्

## ( ज्योतिषामयनं चक्षुः )

शास्त्रमर्मज्ञाः विद्वांसो विदन्ति यत् षड् वेदाङ्गेषु ज्यौतिषं चरमं वेदाङ्गमस्ति। यथा वेदपुरुषस्य व्याकरणं मुखमस्ति तद्वत् ज्यौतिषं नयनं स्मृतम्। नेत्राभ्यां विना यथा कोऽपि मानवः स्वयमेव पदात्पदमपि चलितुं न शक्नोति तद्वत् ज्यौतिषशास्त्रं विना वेदपुरुषस्यान्धता समापतिष्यति। वेदस्य प्रवृत्तिर्विशेषेण यज्ञसम्पादनाय भवति। यज्ञस्य च विधानं विशिष्टकालानामपेक्षां स्थापयति। यज्ञ-याग-सम्पादनाय समय-शुद्धेर्महती आवश्यकता भवति। कानिचित् कर्मकाण्डविधानान्येतादृशानि सन्ति येषां सम्बन्धः सम्वत्सरेण भवति कस्यचिच्च ऋतुना। एतदुदाहरणञ्च यथा—तैत्तिरीय-ब्राह्मणस्य कथनमस्ति—'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत। शरदि वैश्य आदधीत'। अत्रायमाशयः—ब्राह्मणः वसन्ते ( चैत्र वैशाखयोः ) अग्नेः आधानं ( स्थापनम् ) कुर्यात्, क्षत्रियः ग्रीष्मे ( ज्येष्ठ-आषाढयोः ), वैश्यश्च शरदृतौ ( आश्विन-कार्तिकयोः ) आधानं कुर्यात्। ताण्डयब्राह्मणे ( सामवेदस्य ) कतिपय-यज्ञस्य सम्पादनं विशिष्टमासेषु विशिष्टपक्षेषु च प्राप्यते। तथा च तत्र—'एकाष्टकायां दीक्षेरन् फाल्गुनी पूर्णमासे दीक्षेरन्' इति नियमात्। अपरञ्च—प्रातःकाले सायंकाले च प्रत्येकं नियमितमग्निहोत्रिण मग्नौ दुग्धेन घृतेन वा हवनं कुर्युः, इति विधानं तैत्तिरीयब्राह्मणे विद्यते—'प्रातर्जुहोति सायं जुहोति'। अत्रायमाशयो यत् सुचिन्तितरूपेण नक्षत्रस्य, तिथेः, पक्षस्य, मासस्य, ऋतोः, सम्वत्सरस्य च कालस्य समस्तखण्डैस्सह यज्ञ-यागस्य विधानं वेदेषु प्राप्यते। तत्रैव महती प्रतिष्ठा। तस्मादे-तेषां नियमानां परिपालनाय यथार्थरूपेण निर्वाहाय च ज्योतिषशास्त्रस्य ज्ञानं नितान्त-मावश्यकमस्ति। उपादेयता च तत्रैव सिद्धयति। अतएव विद्वांसः कथयन्ति—ज्यौतिषं कालविज्ञापकं शास्त्रम्, यतोहि—'मुहूर्त्तं शोधयित्वा क्रियमाणा यज्ञादि-क्रिया विशेषाः फलाय कल्पन्ते' नान्यथा, तन्मुहूर्त्तज्ञानञ्च ज्योतिषायत्तमतोऽस्य ज्यौतिषशास्त्रस्य वेदाङ्गत्वमुररीकृतम्। अतएव वेदाङ्गज्यौतिषस्य तु परमाग्रहोऽयं यत्—यो जनः ज्यौतिषं सम्यक्तया विजानाति स एव यज्ञस्य यथार्थरूपेण ज्ञानं दधाति। वेदाङ्गज्यौतिषस्यत्वयमेव डिण्डिमघोषः जनान् उद्‌बोधयति—

वेदा हि यज्ञार्थमभिप्रवृत्ताः कालाभिपूर्वा विहिताश्च यज्ञाः।
तस्मादिदं कालविधानशास्त्रं **यो ज्योतिषं वेद स वेद यज्ञम्॥**

यज्ञस्य साफल्यं न केवलं समुचितविधानाचरणे एव प्रत्युत उचिते निर्दिष्टनक्षत्रे समुचिते काले एव विधानाद्भवति। अतएव—असुराणां परिभाषा विषये श्रुतेर्वचनं ध्यातव्यम् यत्—'ते असुरा अयज्ञा अदक्षिणा अनक्षत्राः। यच्च किञ्चाकुर्वत तां कृत्या-मेवाकुर्वत'। अत्रेदमवधेयम्—असुराः यज्ञेन हीनाः भवन्ति, दक्षिणादानेन विरहिताः

भवन्ति, नक्षत्रेण रहिताश्च भवन्ति। अतएव यत्किञ्चित् कुर्वन्ति--कृत्यामेव समर्पयन्ति। परञ्च देवानामेतद्विपरीतास्थितर्भवति—ते समुचिते समये सदक्षिणाकंयज्ञ-सम्पादनं कुर्वन्ति।

**ज्यौतिषस्य वेदाङ्गत्वम्**—वैदिकयज्ञविधानाय ज्यौतिषस्य महन्महत्त्वं स्वीकृत्य ज्यौतिषमार्तण्डेन सुविख्यातेन भास्कराचार्येण स्पष्टमुद्घोषितं स्वीयेसिद्धान्तशिरोमणौ यथा—

वेदास्तावद् यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।
शास्त्रादस्मात् कालबोधो यतः स्यात् वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात्॥

अपरञ्च—वेदाङ्गज्यौतिषस्य सम्मतौ ज्यौतिषशास्त्रं समग्रवेदाङ्गेषु मूर्धस्थानीय-मस्ति, तथा च तत्र—

यथा शिखा मयूराणां नागानां मणयो यथा।
तद्वद् वेदाङ्गशास्त्राणां गणितं मूर्धनि स्थितम्॥

अत्रायं निष्कर्षार्थः—यथा मयूराणां शिखा तस्य शिरस्येव तिष्ठति, सर्पाणां मणिः तेषां मस्तके एव विराजते ( रात्रौ सर्पाः मस्तकाद् मणिमुद्धृत्य भूमौ स्थापयित्वा-क्षेत्रेषु इतस्ततः विचरन्ति पुनः क्रीडायाः सम्पन्ने सति मस्तके मणिं धारयन्ति—इति लौकिकप्रवादः ) तेनैव प्रकारेण शिक्षा-कल्पादि वेदाङ्गषडङ्गेषु ज्यौतिषस्य सर्वश्रेष्ठं स्थानं प्राप्तमस्ति। ज्यौतिषं वेदपुरुषस्य चक्षुरस्ति—**'शिक्षाघ्राणं तु वेदस्य ज्यौतिषं नयनं स्मृतमिति**, पाणिनीय शिक्षायामुद्घोषितमस्ति। यथा—चक्षुविहीनः पुरुषः ( अन्धः ) स्वकार्यसम्पादनेऽसमर्थो भवति तद्वत् ज्यौतिषशास्त्रज्ञानेन विरहितः पुरुषः वैदिककर्मकाण्डेषु सर्वथा अन्ध एव तिष्ठति।

ज्यौतिषशास्त्रस्येतिहासे एष उल्लेखो मिलति यत्—पुराकाले चतुर्णामपि वेदानां पृथक् पृथक् ज्यौतिषशास्त्रमासीत्, तेषु ( अधुना ) सामवेदस्य ज्यौतिषशास्त्रं नोपलभ्यते। अवशिष्टानां त्रयाणामितरेषां वेदानां ज्यौतिषाणि प्राप्यन्ते, तद्यथा क्रमेण—

( १ ) ऋग्वेदस्य ज्यौतिषम्—**आर्च** ज्यौतिषम्, षट्त्रिंशत् पद्यात्मकम्।
( २ ) यजुर्वेदस्य ज्यौतिषम्—**याजुष** ज्यौतिषम्, ऊनचत्वारिंशत् पद्यात्मकम्।
( ३ ) अथर्ववेदस्य ज्यौतिषम्—**आथर्वण** ज्यौतिषम्, द्विषष्टयुत्तरशतपद्यात्मकम्।

वस्तुतः आर्चज्यौतिष-याजुषज्यौतिषयोः सामानाधिकरण्यं प्रतीयते। यतो ह्यनेकत्र द्वयोः साम्यं विद्यते। क्वचिदितिहासे द्वयोरेव नामोल्लेखः आथर्वणस्य चर्चैव नास्ति। संख्या विषयेऽपि मतैक्यं न तिष्ठति, याजुषज्यौतिषस्य पद्यसंख्या उपरि 'ऊन चत्वारिंशत् ( ३९ ) निर्दिष्टा विद्यते, क्वचिच्चेतिहासे सैषा संख्या ऊनपञ्चाशत् ( ४९ ) विद्यते। एवमेव आथर्वणज्यौतिषस्थाने 'अथर्वज्यौतिषम्' इत्यपि मिलति।

## वेदाङ्गज्यौतिषम्

अस्मिन् वेदाङ्ग ज्यौतिषे वेदकालीनस्य प्राचीनज्यौतिषशास्त्रस्य वर्णनं विद्यते।

तद्युगस्य सर्वाः वार्ताः इयत्यः अज्ञाताः सन्ति यत् वेदाङ्गज्यौतिषस्य रहस्यानां स्फुटीकरणमद्यत्वे विद्वद्भ्योऽपि विषमा समस्योत्पद्यते। श्रूयते इतिहासे पठ्यते च यद् बहुभिर्वर्षैः प्राच्याः पाश्चात्याश्च विद्वांसः एषां श्लोकानां रहस्योद्घाटने प्रयत्नशीलाः सन्ति, परन्त्वद्यापि—वेदांगज्यौतिषस्य कतिपयानि पद्यानि—एतादृशानि सन्ति—येषां रहस्यार्थोद्घाटनमद्यापि समुचितरूपेण न ज्ञायते।

पाश्चात्य विद्वद्भिः डॉ० थीवो महाशयैः प्राच्यैश्च शंकरबालकृष्णदीक्षितैः, लोकमान्य बालगंगाधरतिलकैः; महामहोपाध्यायसुधाकरद्विवेद्यादिभिर्विश्रुतैर्मनीषिभिः काले काले वेदाङ्गज्यौतिषस्योपरि गूढार्थव्याख्याः कृता। डॉ० थीवो महाशयेन १८७७ ईशवीये एशियाटिकसोसाइटी कलिकातायाः शोधपत्रिकायाम्, शंकरबालकृष्णदीक्षितेन 'भारतीयज्यौतिषशास्त्रनामके मराठीग्रन्थे, लोकमान्यतिलकेन स्ववेदाङ्गज्यौतिष' नामके आँग्लभाषामये पुस्तके, म० म० सुधाकरद्विवेदिना च वेदाङ्गज्यौतिषस्य स्वनिर्मिते संस्कृतभाष्ये एषां श्लोकानां सुस्पष्टतया सारगर्भिता व्याख्याः कृता। वेदाङ्गज्यौतिषस्योपर्येकम् प्राचीनं भाष्यमपि प्रकाशितमस्ति। यस्य रचना शेषकुलोत्पन्नेन काशीनिवासिना सोमाकरनामकेन केनापि दाक्षिणात्येन विचक्षणेन विदुषाकृताऽऽसीत्। सोमाकरपदाभिधाना विद्वांसः ज्यौतिषशास्त्रस्य प्रकर्षपाण्डित्यशीलाः मर्मज्ञाः आसन्। नात्रसन्देह लेशोऽपि। परञ्च खेदस्य विषयोऽयं यत्तेषां जीवनचरितस्य समयस्य च परिज्ञानं न जायते।

**वेदाङ्गज्यौतिषस्य**—( आर्चज्यौतिषस्य, याजुषज्यौतिषस्य, आथर्वणज्यौतिषस्य च ) कर्तुर्नाम लगध इति आसीत्। आर्चज्यौतिषस्य द्वितीयेन श्लोकेनैतद् ज्ञायते। तथा च तत्रोक्तम्—

'प्रणम्य शिरसा कालमभिवाद्य सरस्वतीम्।
कालज्ञानं प्रवक्ष्यामि लगधस्य महात्मनः'॥

अत्रैतद् वैशिष्टयं विद्यते यत्—अस्मिन् ग्रन्थे पञ्चवर्षात्मको युगः स्वीकृतः, वर्षाणामेषां नामानि यथा—सम्वत्सरः, परिवत्सरः, इदावत्सरः अनुवत्सरश्चेति। एतन्नामानि प्रकरणवशात् तैत्तिरीये ब्राह्मणेऽपि प्राप्यन्ते। तस्मिन् काले वर्षारम्भः ( सम्वत्सारारम्भः ) माघमासादारभ्यतेस्म ज्यौतिषस्य सिद्धान्तग्रन्थेषु द्वादशराशिभिः ( मेष, वृष, मिथुन, कर्क, सिंह, कन्या, तुला, वृश्चिक, धनु, मकर, कुम्भ, मीन नामकैः ) गणना भवति। परञ्चास्मिन् वेदांगज्यौतिषे राशीनां क्वापि नाम निर्देशो नास्ति। प्रस्तुतायाः गणनायाः आधारभूमिः अश्विन्यादि-सप्तविंशति-नक्षत्राण्येव सन्ति। श्रीमता शंकरबालकृष्ण-दीक्षितेन बहुप्रयत्नेन सप्रमाणं सुनिश्चितं यत् अस्य वेदाङ्गज्यौतिषस्य रचनाकालः ईशवीयशतकात् पूर्वं १४०० वर्षे एव संजातः इति। अति प्राचीनकालादेव सम्बद्धत्वात् ग्रन्थोऽयं दुरूहो दुर्बोधश्च जातः। महनीयस्य प्रत्यक्षस्यास्य ज्यौतिषशास्त्रस्य त्रयो मार्गाः भवन्ति। तस्मादिदं शास्त्रं त्रिस्कन्धमित्युच्यते बुधैः। तदुक्तं यथा—

'सिद्धान्त-संहिता-होरा-रूपं स्कन्धत्रयात्मकम् ।
वेदस्य निर्मलं चक्षुर्ज्योतिश्शास्त्रमनुत्तमम्' ॥

अस्य त्रिस्कन्धात्मकस्य ज्यौतिषस्याधोलिखिताऽष्टादशमहर्षयः प्रवर्तकाः प्रतिपादिताः सन्ति । एते समये समये ज्यौतिषस्य विकासाय प्रयत्नानि चक्रुः । एतेषां गणना पद्याभ्यां यथा—

'सूर्यः पितामहो व्यासो वशिष्ठोऽत्रिः पराशरः ।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः ॥
लोमशः पुलिशश्चैव च्यवनो यवनो भृगुः ।
शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्तकाः' ॥

एतत् स्पष्टम् । अपरञ्च सिद्धान्ततत्त्वविवेके श्रीमता कमलाकरभट्टेन अस्य शास्त्रस्य विकासक्रमःप्रशस्तिश्च निम्नाङ्कितेन पद्येन कृताऽस्ति । एतच्च ध्यातव्यम्—

'ब्रह्मा प्राह च नारदाय हिमगुर्यच्छौनकायामलं,
माण्डव्याय वशिष्ठसंज्ञकमुनिः सूर्योमयायाह यत् ।
प्रत्यक्षागमयुक्तिशालि तदिदं शास्त्रं विहायान्यथा,
यत् कुर्वन्ति नराधमास्तु तदसद्वेदोक्तिशून्याभृशम्' ॥

उपर्युक्तानामेतेषां सिद्धान्ता अपि तदारभ्य प्रचलिताः सन्ति स एष सिद्धान्तयुगः ।

## सिद्धान्तयुगः

समीक्षकाः विद्वांसः कथयन्ति—वेदाङ्गज्यौतिषादारभ्य यो युगः वराहमिहिरपर्यन्तमायाति तं वयं सिद्धान्तयुगस्य नाम्ना जानीमः । यतो ह्यस्मिन् युगे सिद्धान्तानां प्रवर्तनं प्रचलनं वा सविशेषरूपेणाभूत् । युगोऽयमस्मभ्यः तमसावृतः स्याद्यदि सुविख्यातो वराहमिहिरस्तस्मिन् युगे प्रचलितानां पञ्च सिद्धान्तग्रन्थानां सारांशं स्वपञ्चसिद्धान्तिकायां प्रचारितं न कुर्यात् । वराहमिहिरः स्वयमेव सर्वतन्त्रस्वतन्त्रः प्रतिभासम्पन्नः ज्यौतिर्विदासीत् । इत्येव नहि ते चैकस्य स्वतन्त्रस्य सिद्धान्तग्रन्थस्य रचनायाः वैचक्षण्यं स्वस्मिन् स्थापयन्ति स्म । परञ्च तैः व्यापकबुद्धचा तद्युगस्य सिद्धान्तग्रन्थानां परिचयः समुपस्थापितः । ऐतिहासिकदृष्टचा महत्त्वपूर्णमिदं कार्यम् ।

विद्वांसः कथयन्ति यत्—पञ्चसिद्धान्तिकग्रन्थस्य या प्रतिः सम्प्रत्युपलब्धाऽस्ति, या च डॉ० थीवो महाशयेन महामहोपाध्याय-पण्डितसुधाकर-द्विवेदिना च आंग्लानुवादेन संस्कृतटीकया च सह १८८९ ईशवीये वर्षे प्रकाशिताऽऽसीत् सा प्रतिः अनेकषु स्थलेषु—अशुद्धा भ्रष्टा च विद्यते । तथापि सम्पादकयोः अश्रान्तपरिश्रमेण कृतमेतत् दुष्करं कार्यं ज्यौतिषशास्येतिहासे महत्त्वपूर्णमासीत् । एषां पञ्चसिद्धान्तानां नामानि सन्ति—( १ ) पौलिशः, ( २ ) रोमकः, ( ३ ) वाशिष्ठः, ( ४ ) सौरः, ( ५ ) पैतामहश्च । एतेषां विषये आचार्यवराहमिहिरेण स्वयमेव लिखितं यत्—एषु पञ्चसु सिद्धान्तेषु पौलिश-रोमकयोश्च व्याख्याकाराः लाटदेव-महाशयाः सन्ति । पौलिशसिद्धान्तः सुस्पष्टोऽस्ति । रोमकसिद्धान्तोऽपि तस्यैव सादृश्यं धत्ते । सूर्यसिद्धान्तः सर्वतोऽधिकः

सुस्पष्टः । अवशिष्टौ च वाशिष्ठ-पैतामहसिद्धान्तौ-अतीवभ्रष्टौ स्तः । अस्य ग्रन्थस्य रचनाकालः प्रथमशतकः ।

एषु सिद्धान्तग्रन्थेषु सूर्यसिद्धान्तनामको ग्रन्थः पृथगप्युपलब्धो भवति । अस्य च सारांशः पञ्चसिद्धान्तिकायामपि प्रदत्तोऽस्ति । द्वयोस्तुलनया द्वयोरन्तरं प्रतीयते । ज्ञायते यत् प्राचीन सूर्यसिद्धान्ते नवीनानि संशोधनानि कृतानि सन्ति । येषां लक्ष्यमासीत् यत् सूर्याचन्द्रमसोः ग्रहयोः चंक्रमणस्य कालः (यस्य पारिभाषिकीसंज्ञा भगणो विद्यते ।) नेत्राभ्यां दृष्टानां यन्त्रैश्च मापितानां मानानां यथासम्भवं नैकटचं प्राप्नुयात् । अनेन प्रकारेण संशोधितः सूर्यसिद्धान्तः प्राचीनसंस्करणापेक्षयाऽधिकं फलं ददाति ।

( १ ) **पितामहसिद्धान्तः**—पञ्चसिद्धान्तिकायाः द्वादशाध्याये केवलं पञ्चश्लोकेष्वस्य परिचयो विद्यते । तेन ज्ञायते यत् एतन्मतं वेदाङ्गज्यौतिषेन सह प्रचुरं साम्यं दधाति ।

( २ ) **रोमकसिद्धान्तः**—अस्य सिद्धान्तस्य लेखकः श्रीषेणः कथ्यते । परञ्च डॉ० थीवो महाशयस्य मतमस्ति यत् श्रीषेणेन न कोऽपि मौलिकः ग्रन्थः विरचितः अपितु प्राचीनरोमकसिद्धान्तस्य केवलं नवीनं स्वरूपमेव प्रदत्तम् । रोमकसिद्धान्तः यवनज्यौतिषेन सह साम्यं स्थापयति, परञ्चानेकत्र भिन्नता अपि प्रतीयते । अतो वयं रोमकसिद्धान्तं यूनानीज्योतिषस्यान्धानुकरणं नैव मन्यामहे । वराहमिहिरात्पूर्वं भारते यूनाने चावागमनं विशेषरूपेणासीत् । अतः यूनानीज्योतिषस्यागमनमप्यस्यैव विचारविनिमयस्यैकं स्फुटरूपं विद्यते ।

( ३ ) **पुलिशसिद्धान्तः**—पञ्चसिद्धान्तिकायामस्य सिद्धान्तानां परिचयः पाठानामशुद्धचा विशुद्धरूपेण न मिलति । अत्र ग्रहणानां गणनायै अपि नियमाः सन्ति, परञ्च ते सूर्यसिद्धान्तस्य रोमकसिद्धान्तस्य चापेक्षयाऽतिस्थूलाः सन्ति । भट्टोत्पलेन बृहत्संहितायाष्टीकायां पृथूदकस्वामिना च ब्राह्मस्फुटसिद्धान्तस्य टीकायां पुलिशसिद्धान्तस्योल्लेखः कृतः । यश्चास्मात् ग्रन्थात् सर्वथा भिन्नः प्रतीयते ।

( ४ ) **वशिष्ठसिद्धान्तः**—अस्यातिसंक्षेपतमं विवरणं प्राप्यते । अस्य कतिपयसिद्धान्ता पितामहसिद्धान्तेन सह मिलन्ति । वराहमिहिराचार्याः स्वयमेवैनं भ्रष्टमामनन्ति । ब्रह्मगुप्तेन स्फुटसिद्धान्ते विष्णुचन्द्रेण लिखितस्य वशिष्ठसिद्धान्तस्यैकं संशोधितं संस्करणमुपस्थापितमासीत् यद्धि ब्रह्मगुप्तेनातिहीनं कथितम् । साम्प्रतं लघुवशिष्ठसिद्धान्तस्य नाम्ना यः ग्रन्थः प्रकाशितः स तु अस्माद् भिन्नः ।

**सूर्यसिद्धान्तः**—विख्यातेन वराहमिहिराचार्येण स्वयमेव सूर्यसिद्धान्ताय सर्वतोऽधिकमुच्चं स्थानं प्रदत्तमस्ति । अद्यापि सूर्यसिद्धान्तः समुपलब्धोऽस्ति । यस्यांग्लहिन्दीभाषयोः अनुवादः प्रकाशितोऽस्ति । ग्रन्थोऽयं प्राचीनग्रन्थादनेकत्र भिन्नतां स्थापयति । अस्मिन् संशोधिते सूर्यसिद्धान्ते १४ चतुर्दशाधिकारा अध्यायाः वा सन्ति । तत्र प्रथमेऽध्याये ग्रन्थस्यास्य रहस्योद्घाटनकर्तारः स्वयमेव भगवन्तः सूर्यदेवाः कथिताः सन्ति तदुपदेशञ्च श्रुत्वा मयनामकेनासुरेणास्य निर्माणं कृतम् । अस्य मूलरचयितुर्नाम अज्ञातावस्थायामस्ति । अत्र ग्रहाणां मध्यगतीनां वर्णनमस्ति । [illegible]

दयो ग्रहाः समानकोणीयवेगेन नहि प्रचलन्ति । अस्याः कल्पनाया अनुसारं गणनया या स्थितिरुत्पद्यते तां स्थितिं 'मध्यमज्या' मध्यमस्थितिर्वा कथयन्ति । ग्रहगतीनां वर्णनानन्तरं बीजसंस्कारकरणस्योपदेशोऽस्ति । गणनायां वेधे चान्तरेण बीज-संस्कारः परमापेक्षितः संजातः । अतो युगे सूर्यस्य चन्द्रमसः ग्रहाणाञ्च भगणानां संख्यायां परिवर्तनं विहितम् । प्रकारान्तरेण तेषां दैनिकी गतिः परिवर्तिता । एतत्सर्वं षोडशे शतके कृतं भवेत् । सूर्याचन्द्रमसोः या सारिणी 'बरजेसेनेन' स्वकीयेऽनूदिते ग्रन्थे प्रदत्ता, तया सारिण्या ज्ञायते—सूर्यसिद्धान्तस्य मानं पर्याप्तं शुद्धमस्ति । आधुनिकस्य सूर्य-वर्षमानं २६५ दिवसाः ( दिनानि ), ६ होरा, ९ मि० १०'८ पलानि । सूर्य-सिद्धान्ते एतन्मानं ३६५ दिनानि, ६ होरा, १२ मिनटानि, ३६'६ पलानि—विद्यन्ते । अनेन प्रकारेण वयं जानीमो यत्—अद्यापि वैज्ञानिकगणनायाः समकक्षतया सूर्य-सिद्धान्तस्य गणना पर्याप्तरूपेण शुद्धा प्रामाणिकी यथार्था च विद्यते एतदर्थमेवास्याः गणनायाः आधारे निर्मिताः पञ्चाङ्गादयोऽपि मान्या भवन्ति ।

द्वितीयेऽध्याये ग्रहाणां स्पष्टस्थितेः वर्णनं विद्यते, एतदर्थञ्च ज्यासिद्धान्तस्योपयोगो विहितोऽस्ति । ग्रहणस्य विषये चन्द्रमसः व्यासः ४८० योजनानि कथितानि सन्ति । पृथिव्याः निर्दिष्टव्यासेन ( १६०० योजनानि ) तुलनायां चन्द्रमसः व्यासः पृथिव्याः व्यासस्य ०'३३ इत्यस्ति । यद्धि वास्तविकात् मापनात्—अधिकं भिन्नं नास्ति । परञ्च सूर्यव्यासस्य वर्णनं नितान्तमशुद्धमस्ति सूर्यस्य व्यासः पृथिव्याः व्यासात् चतुर्गुणोऽत्र प्रतिपादितोऽस्ति । यः वास्तविकेन व्यासेन अत्यधिकोऽशुद्धो विद्यते । अनेनैव प्रकारेण सूर्यग्रहणज्ञापनस्य पद्धतावपि महत्या बुद्धिमत्तया कतिपयनियमाः प्रसारिताः सन्ति, यद्यप्यनेकसंशोधनानां परित्यागेनान्तिमः परिणामः समुचितो न निःसरति । एतदनन्तरं ग्रहयुतेः, नक्षत्रयुतेश्च वर्णनं विद्यते । एकस्मिन् अध्याये यन्त्राणां निर्माणस्य वर्णनं विद्यते । अन्तिमे मानाध्याये अयनस्य, संक्रान्तेः, उत्तरायणस्य, दक्षिणायनस्य चान्द्र-सावनवर्षयोश्च कालविवेचनं कृतमस्ति । अत्र सूचितमस्ति यत्—सावनदिनम् सूर्यस्यैकस्मादुदयादारभ्यान्योदयपर्यन्तस्य कालं कथयन्ति ।

**आर्यभटः**—इति तु सुनिश्चितं विद्यते यत्—भारतीयज्योतिषशास्त्रस्येतिहासस्या-विच्छिन्नापरम्परासु निश्चितरूपेणार्यभटादारम्भो भवति । वेदांगज्योतिषस्य रचना सामान्यतः पञ्चदशशतकात् पूर्वमामनन्ति विद्वज्जनाः । तदनन्तरं सहस्रवर्षपर्यन्तं कस्यापि ज्योतिर्विदः स्थितिर्न ज्ञायते । कौटिल्यस्यार्थशास्त्रस्यानुशीलनेन परिज्ञानं भवति यत्—तस्मिन् काले ३०० ईशवीये पूर्वे ज्योतिषस्य सविशेषोन्नतिरासीत् । जैनमतावलम्बिनां 'सूर्यप्रज्ञप्ति'-चन्द्रप्रज्ञप्तिश्चेति नामकौ द्वौ ग्रन्थौ समुपलब्धौ स्तः यौ कौटिल्यस्यैकशताब्दीपूर्ववर्तिनौ स्तः । तयोर्विषयः—विश्वस्य ( सृष्टेः ) रचना विद्यते तथा चानयोः सूर्यचन्द्रविषयिकाः कल्पनाः जैनधर्ममतानुसारं निर्दिष्टाः सन्ति ।

आर्यभटस्य जनिः ४७६ ईशवीयेवत्सरे कुसुमपुरे ( पाटलिपुत्रे ) अभूत् । अनेन त्रयोविंशतितमे वयसि ४९९ ईशवीये स्वमहत्त्वपूर्णः ग्रन्थः विरचितः । यो हि तन्नाम्नैव 'आर्यभटीय' इति कथ्यते । अस्मिन् ग्रन्थे शककालस्य वैक्रमसम्वत्सरस्य वा चर्चा-

नास्ति, ग्रहाणां गणनायै च ३६०० कलिसंवत्सरं ( ४९९ ई० ) निश्चितमस्ति। पञ्चमशतकस्य मध्ये 'महासिद्धान्तस्य' रचयिता एकोऽन्यो ज्योतिर्विदस्यैव नाम्नो बभूव, तस्मादेनं पृथक्करणाय अयमार्यभटः प्रथमः' इति कथनं समुचितं भविष्यति। इमे सुनिश्चितमतीवप्रतिभाशालिनो ज्योतिर्विद आसन्, यैः प्राचीनग्रन्थेषु लिखितान् सिद्धान्तान् स्वानुभवैः शोधयित्वाऽस्यार्यभटीय ग्रन्थस्य रचना कृता। आर्यभटीयस्य रचना पद्धतिरतीववैज्ञानिकी विद्यते भाषाचातिसंक्षिप्ता, येनैषां सिद्धान्ता दुरूहाः संजाताः। तथाचोक्तं गोलपादे—

सदसज्ज्ञानसमुद्रात् समुद्धृतं देवताप्रसादेन।
सज्ज्ञानोत्तमरत्नं मया निमग्नं स्वमतिना वा॥

**आर्यभटस्य सिद्धान्ताः**—आर्यभटीये १२१ सम्पूर्णश्लोकाः सन्ति, ये चतुर्षु खण्डेषु विभाजिताः सन्ति—( १ ) गीतिकापादः, ( २ ) गणितपादः, ( ३ ) कालक्रियापादः, ( ४ ) गोलपादश्चेति। गीतिकापादः केवलं ११ श्लोकानामस्ति, ये विषयाश्चात्र वर्णिताः सन्ति ते सूर्यसिद्धान्तस्यानेकेष्वधिकारेषु सन्ति। एभिरक्षरैः संख्या प्रकटनस्यैकानवीनारीतिरुद्भाविता। येन श्लोकेषु महतीनां संख्यानां नियमने सौविध्यं संजातम्। एतदनुसारं 'क' वर्णादारभ्य' म' पर्यन्तस्थिताः वर्णाः क्रमशः १ इत्यारभ्य २५ पर्यन्तसंख्यानां द्योतकाः सन्ति।

( २ ) आर्यभटस्य मूलसिद्धान्तोऽस्ति यत् पृथिव्याः दैनिकं भ्रमणं भवति। नौकागतिरिव पृथिव्यपि नैरन्तर्येण भ्रमति सूर्यश्च स्वयं स्थिर एवास्ति। अनेनसिद्धान्तेनास्य विचारस्वातन्त्र्यस्य परिचयो मिलति। एतेषामस्य सिद्धान्तस्य कारणात् वराहमिहिर—ब्रह्मगुप्ताभ्यां ज्योतिर्विद्भ्यामेतेषां निन्दा विहिता।

( ३ ) युगानां परिमाणेऽपि—एषां नवीनं मतमस्ति, यत्र प्रत्येकस्मिन् महायुगे सत्य-त्रेता-द्वापर-कलियुगाश्च विभिन्नपरिमाणात्मकाः स्वीक्रियन्ते तत्रैतैः सर्वे समानकालिकाः स्वीकृताः।

आर्यभटेन स्वग्रन्थस्य तृतीयेऽध्याये विविधज्यौतिषसम्बन्धिनो विषयाः लिखिताः, यैर्ज्ञायते यत्—चैत्रशुक्लप्रतिपत्तः युगानां, वर्षस्य, मासस्य, दिवसस्य च गणनायाः शुभारम्भो भवति। अत्र ग्रहाणां मध्यमगतेः स्पष्टगतेश्च नियमानामुल्लेखो विद्यते। ग्रन्थस्यान्तिमेऽध्याये ( गोलपादे ) पञ्चाशत् श्लोकाः सन्ति, येषु गोलविषयका अनेके नियमाः, युगसम्बन्धिताः नवीनाः कल्पनाः, सूर्याचन्द्रमसोः ग्रहणानां गणनादयः विविधज्यौतिष सम्बन्धितानां नियमानां समीक्षा विद्यते। पृथिव्याः दैनिकभ्रमणस्य विषये आर्यभटेन कमनीयमुदाहरणं प्रस्तूय लिखितं यत्—यथा प्रचलन्त्यां नौकायां स्थितोमनुष्यः तटस्थितान् स्थिरान् वृक्षान् विपरीतदिशायां चलन्निव पश्यति तद्वत् लङ्कायां ( भूमध्यरेखायां ) स्थिराः ताराः पश्चिमस्यां दिशि प्रचलन्त्यः दृश्यन्ते।

एतदतिरिक्तं स्वगोलसम्बन्धिताः अनेके विषयाः अत्र ग्रथिताः सन्ति। आर्यभटीयस्योपरि चतस्रष्टीकाः उपलभ्यन्ते। यासां रचयितॄणां नामानि सन्ति—( १ ) भास्करप्रथमः, ( २ ) सूर्यदेवयज्वा, ( ३ ) परमेश्वरः, ( ४ ) नीलकण्ठश्चेति। तत्र

परमेश्वरस्य 'भट्टदीपिकया' सह—उदयनारायणसिंहेन हिन्दीभाषायां टीका कृता विद्यते। सूर्यदेवयज्वनः अप्रकाशितायां टीकायाम् आर्यभटप्रकाशस्यापि चर्चा विद्यते।

**वराहमिहिरः**—अवन्तिकायाः सूर्यभक्तस्य वराहमिहिरस्य स्थानं ज्योतिष-जगति सूर्यसदृशोपममस्ति। इमे अवन्तिपुर्याः निवासिन आसन्। एतैः स्वसमयस्य सुस्पष्टा चर्चा न कृताऽस्ति। तथाप्यनेकैः प्रमाणैः वराहमिहिरस्य जीवनकालः षष्ठशतकस्य पूर्वार्द्धे स्वीक्रियते। एषां पितुर्नाम—आदित्यदास आसीत्, ये एषां विद्यागुरवोऽप्यासन्। एवञ्च 'कापित्थकः' वासस्थानमासीत्। एतत् स्थानमद्यापि 'उज्जयिन्याः' पार्श्वे 'कामथा' नाम्ना प्रख्यातमस्ति। एतैः सूर्यं प्रसाद्याशेषं ज्ञानं सम्प्राप्तम्। एषां पृथुयशसा पुत्रेण 'षट्पञ्चाशिकाया' रचना कृता, या अद्यापि प्रचलिता विद्यते।

**ग्रन्थाः**—एषां ग्रन्थाः स्वविषयस्य प्रौढासु, प्रमाणसमन्वितासु रचनासु विद्यन्ते। मुख्यग्रन्थानां नामानि सन्ति—(क) पञ्चसिद्धान्तिका, (ख) बृहज्जातकः (ग) बृहद्यात्रा, बृहद्विवाहपटलयात्रा च, (घ) बृहत्संहिताचेति।

**लाटदेवः**—ज्यौतिर्विदांवरेण वराहमिहिरेण पञ्चसिद्धान्तिकायां येषां पञ्च ग्रन्थानां समाहारः कृतस्तेषु द्वयोः पौलिशरोमकयोश्चेमे रचयितारः सन्तीति तज्ज्ञाः कथयन्ति। भास्करप्रथमेन विरचिताद् 'महाभास्करीयात्' ज्ञायते यत्—इमे आर्यभटस्य शिष्या आसन्। एषां कालः वै० सं० ५६२ तः ६६५ इत्यस्य मध्ये स्वीकर्त्तव्यः। रोमकसिद्धान्तस्य रचनाशैल्या एतद् ज्ञायते यत् अयं ग्रन्थः ग्रीक-(यूनान) सिद्धान्तेष्वाश्रितः। कतिपयविदुषां मतमस्ति सिकन्दरियायाः सुप्रसिद्धस्य ज्यौतिर्विदः 'तालोमी' इत्यस्य सिद्धान्तानामाधारे अस्य (रोमकसिद्धान्तस्य) रचना बभूव। अस्य प्रमाणं ते यवनपुरस्य मध्यकालीने सिद्धं साधितं वा अहर्गणं स्थापयन्ति। ब्रह्मगुप्तेन तु अस्य सिद्धान्तानां भूयसी निन्दा कृता। पुलिशसिद्धान्तनामकस्य ग्रन्थस्योल्लेखः भट्टोत्पलेन वाराहमिहिरस्य 'बृहत्संहितायाः' टीकायां 'पृथूदकस्वामिना' च ब्रह्मगुप्तस्य 'स्फुटसिद्धान्तस्य टीकायां कृतः। अयं सिद्धान्तग्रन्थः रोमकसिद्धान्तस्यापेक्षयाऽतीव स्थूलः। गणनायाः सुविधायै सन्निकटैर्मानैर्नियमैश्च साधितोऽयं ग्रन्थः। प्राचीनमूलग्रन्थोऽद्याप्यनुपलब्ध एवेति।

**भास्कर-प्रथमः**—इमे भास्कराः लीलावत्याः विख्यातरचयितुर्भास्कराचार्यात् भिन्ना आसन्। एतेषां द्वौ ग्रन्थौ साम्प्रतमुपलब्धौ स्तः। तौ च—(१) महाभास्करीयः, (२) लघुभास्करीयश्च। अनयोः ग्रन्थयोः एतैः आर्यभटस्य सिद्धान्तः प्रमाणत्वेनोपन्यस्तः। एतेषां जन्मस्थानं 'अश्मक' इति कथ्यते। अस्य स्थानस्य स्थितिः नर्मदा-गोदारीनद्योर्मध्ये क्वाप्यासीत्। अनयोर्द्वयो ग्रन्थयोः उपयोगः दक्षिणभारते पञ्चदशशतकं यावत् बाहुल्येनासीत्।

**ब्रह्मगुप्तः**—ज्योतिषाचार्येषु ब्रह्मगुप्तस्य स्थानमतीवोज्ज्वलमुच्चं चास्ति सुप्रसिद्धेन भास्कराचार्येणायं 'गणकचक्रचूडामणि' इति कथितः। इत्येव नहि एषां मूलांकान् स्वरचनायाः सिद्धान्तशिरोमण्याः आधारभूमिः स्वीकृता। एषां जनिः ईशवीये ५९८ वत्सरे पञ्चनदप्रदेशस्य 'मिलनालका' स्थाने बभूवेति। एतेषां द्वौ ग्रन्थौ स्तः—

( १ ) ब्राह्मस्फुटसिद्धान्तः, ( २ ) खण्डखाद्यकश्चेति । अनयोः ग्रन्थयोः अनुवादोऽरबी-भाषायामप्यभूत् । यस्मिन् 'अस-सिन्ध-हिन्द' ब्राह्मस्फुटसिद्धान्तस्य तथा च 'अल् अर्कन्द' खण्डखाद्यकस्यानुवादोऽप्यस्ति । एतैः विभिन्नस्थानेषु एतन्निर्देशः कृतो यत्—आर्यभट-श्रीषेण-विष्णुचन्द्रादीनां गणनायां ग्रहाणां स्पष्टस्थानं न शुद्धिमायाति अतस्तानि ग्राह्योपयुक्तानि न सन्ति । पश्चाच्चभवद्भिरेतदपि लिखितं यत्—ब्राह्मस्फुट-सिद्धान्तेन दृग्गणितैक्यं भवति । अतः मान्योऽयं ग्रन्थः । तथा चोक्तम्—

तन्त्रभ्रंशे प्रतिदिनमेवं विज्ञाय धीमता यत्नः ।
कार्यस्तस्मिन् यस्मिन् दृग्गणितैक्यं सदा भवति ।।

अनेन कथनेनैतद् सुस्पष्टं भवति यत्तैः ग्रन्थानां रचना ग्रहाणां प्रत्यक्षवेधं विधायैव कृताऽऽसीत् । ते एव प्रथमकल्पाः एतादृशाः ज्योतिर्विद आसन् ये प्रयोगेषु दृढामास्थां स्थापयन्ति स्म । एकत्रैतैः कथितमपि यत्—यदा-कदा गणनायां वेधे चान्तरंस्यात्तदा-वेधेन गणनायाः शुद्धिः कर्त्तव्या ।

ब्राह्मस्फुटसिद्धान्ते चतुर्विंशत्यध्यायाः सन्ति, ते च यथा—मध्यमाधिकारः, स्पष्टा-धिकारः, त्रिप्रश्नाधिकारः, चन्द्रग्रहणाधिकारः, सूर्यग्रहणाधिकारः, उदयास्ताधिकारः, चन्द्रशृङ्गोन्नत्यधिकारः, चन्द्रच्छायाधिकारः, ग्रहयुत्यधिकारः, भग्रहयुत्यधिकारः, तन्त्रपरीक्षाध्यायः, गणिताध्यायः, मध्यगति-उत्तराध्यायः, स्फुटगति-उत्तराध्यायः, त्रिप्रश्नोत्तराध्यायः, ग्रहणोत्तराध्यायः, शृङ्गोन्नत्युत्तराध्यायः, कुट्टकाध्यायः, शंकु-च्छायादिज्ञानाध्यायः, छन्दश्चित्युत्तराध्यायः, गोलाध्यायः, मन्त्राध्यायः, मानाध्यायः संज्ञाध्यायश्चेति । अस्मिन् ग्रन्थे न केवलं ज्योतिषस्य, अपि तु बीजगणितस्य, अंकगणितस्य क्षेत्रमितेश्चापि प्रामाणिकं विवरणं वयं प्राप्नुमः । एष्वध्यायेषु ग्रहाणां मध्यमगतेः गणनायाः, एषां स्पष्टगतिर्ज्ञानस्य रीतीनां दिशः, देशस्य कालस्य च ज्ञानस्य रीतयः, चन्द्र-सूर्यग्रहणयोः गणनायाः ग्रहाणामेकोऽन्यस्य पार्श्वे आगमनस्य, चन्द्रमसः वेधेन छायायाः ज्ञानस्य, नक्षत्रैः सह ग्रहाणां युत्यादीनां विवरणं सम्यक्तया शास्त्रीयपद्धत्या कृतमस्ति ।

गोलाध्याय-नामकेऽध्याये भूगोलखगोलयोः सम्बन्धिता गणना विद्यते । अस्मिन्नप्य-नेके भागाः सन्ति—तद्यथा—ज्याप्रकरणम्, स्फुटगतिवासना, ग्रहणवासना, गोल-बन्धाधिकारश्चेति । एषु भूगोल-खगोलयोः सम्बन्धितानां परिभाषाणां ग्रहाणाञ्च-बिम्बानां व्यासादिज्ञानस्य रीतयः प्रदर्शिताः सन्ति । ब्रह्मगुप्तस्यान्या रचना 'खण्ड-खाद्यक' इत्यस्ति । एभिः सेयं रचना ६६५ ईशवीये वत्सरे स्व एकोनसप्ततितमे वयसि कृता । अयं ग्रन्थः आर्यभटस्य सिद्धान्तानामंशतः पक्षपाती विद्यते । अस्मिन् दशाध्यायाः सन्ति, येषु प्रारम्भिकाष्टाध्यायास्तु केवलमार्यभटस्यानुकरणमात्रमेवास्ति, उत्तरभागस्य च त्रिष्वध्यायेष्वार्यभटस्यालोचनासंशोधनेन सह कृता विद्यते । पूर्वखण्ड-खाद्यकस्याष्टावध्यायाः इत्थम् सन्ति, तिथीनां नक्षत्रादीनाञ्च गणना, पञ्चताराग्रहाणां मध्यस्य स्पष्टस्य च गणना, त्रिप्रश्नाधिकारः, सूर्यग्रहणाधिकारः, उदयास्ताधिकारः, चन्द्रशृंगोन्नत्यधिकारः, ग्रहयुत्यधिकारश्चेति ।

**कल्याणवर्मा**—एषां कालः ५७८ ईशवीये वर्षे स्वीक्रियते। एभिर्यवनानां होराशास्त्रस्य सारः 'सारावली' नामके ग्रन्थे प्रतिपादितः। अयं ग्रन्थः सुविशालः जातकशास्त्रे च महत्त्वपूर्णं स्थानं दधाति। अस्मिन् ग्रन्थे ४२ अध्यायाः सन्ति। अस्मिँश्च सार्धसहस्रद्वयश्लोकाः सन्ति। श्रीमता भट्टोत्पलेन बृहज्जातकस्य टीकायामस्य ग्रन्थस्योल्लेखः कृतः।

**लल्लः**—अस्य पितुर्नामभट्टत्रिविक्रम आसीत्। आर्यभट्टः (प्रथमः) एषां गुरुः ख्यातः। एषां सुप्रसिद्धः ग्रन्थः 'शिष्यधीवृद्धिः' अस्ति, यः आर्यभटस्य सिद्धान्तानामनुसरणं करोति। अस्मिन् गणिताध्याय-गोलाध्यायनामकं प्रकरणद्वयमस्ति। अस्य ग्रन्थस्य रचनाबीजमुक्तं निम्नाङ्कित पद्ये—

विज्ञाय शास्त्रमलमार्यभटप्रणीतं
तंत्राणि यद्यपि कृतानि तदीयशिष्यैः।
कर्मक्रमो न खलु सम्यगुदीरितस्तैः
कर्म ब्रवीम्यहमतः क्रमशस्तदुक्तम्॥

लल्लस्य कालविषये विद्वत्सु पर्याप्तो मतभेदस्तिष्ठति। म० म० पं० सुधाकर द्विवेदिना—एषां कालः ४२१ शकसं० निर्धारितः।

**आर्यभटः द्वितीयः**—आर्यभट-द्वितीयस्य ज्योतिष-गणितयोरुभयोरपि महत्त्वपूर्णं स्थानमस्ति। एषां कालः ९५० ईशवीयस्य पार्श्वे स्वीक्रियते। एषां सुप्रसिद्धा रचना- 'महासिद्धान्तः' विद्यते, यस्मिन् ज्योतिषगणितयोरुभयोरपि समावेशो विद्यते। अस्मिन् ग्रन्थेऽष्टादशाधिकाराः सन्ति। येषु ६२५ आर्याछन्दांसि सन्ति। गोलाध्यायनामके चतुर्दशेऽधिकारे पाटीगणितस्य प्रश्नाः सन्ति। पञ्चदशेऽध्याये क्षेत्रफल—घनफलादयोविषयाः संग्रहीताः सन्ति। एतदतिरिक्तं प्रश्नोत्तराध्याय—कुट्टकाध्यायौचापि स्तः ययोः ग्रहाणां मध्यगति-कुट्टकसम्बन्धितेषु प्रश्नेषु क्रमशः विचारः प्रवर्तते।

**मुंजालः**—एषां कालः ८५४ शकस्य निकटे स्वीक्रियते। यतो ह्येतैः स्वपुस्तके 'लघुमानसे' ग्रहाणां ध्रुवकालः ८५४ शकः प्रख्यापितः। अनन्तरं भास्कराचार्यद्वितीयेन मुनीश्वरेण च मुंजालेन निर्दिष्टस्यायनगतेः वर्णनं कृतम्। एभिः प्रमाणैः एतद् सुनिश्चितं भवति यत्ते ९३२ ईशवीये वत्सरे विद्यमानाः आसन्। स्वकालस्येमे प्रख्याताः ज्योतिर्विदः आसन्। अत्रैतद् वैशिष्टयमस्त्येषां यत्—तारकाणां निरीक्षणं विधाय नव-नवानां विचाराणामेभिः प्रस्तुतीकरणं कृतम्। लघुमानसेऽष्टाधिकाराः सन्ति।

**उत्पलः**—ज्योतिषग्रन्थानां टीकाकारेषु उत्पलस्य नाम सुविख्यातमस्ति। बृहज्जातकस्य टीकायां-टीकालेखनकालः ९६६ ईशवीयस्य चैत्रशुक्लपञ्चमी इति निर्दिष्टोऽस्ति। अनेन ज्ञायते यदिमे दशमशतके आविर्भूता आसन्। एषां पञ्चसंख्यकाट्टीकाः समुपलब्धाः सन्ति। (१) बृहज्जातकस्य टीका, (२) बृहत्संहितायाष्टीका, (३) खण्डखाद्यकस्य टीका, (४) षट्पञ्चाशिकायाष्टीका, (५) लघुजातकस्य टीकाचेति।

**पृथूदकस्वामी**—एभिः ब्रह्मगुप्तस्य ब्राह्मस्फुटसिद्धान्ते एका टीका विरचिता,

अपि चैषां मतस्योल्लेखो भास्कराचार्येण ( द्वितीयेन ) स्वग्रन्थेषु अनेकत्र कृतोऽस्ति । दीक्षितस्य मतानुसारमिमे उत्पलस्य समकालीनाः सन्ति । अपि चैतैः ब्रह्मगुप्तस्यान्य-ग्रन्थस्य 'खण्डखाद्यकस्यापि' टीका लिखिता । एतेन स्पष्टं भवति यत् यथा—उत्पलेन वराहमिहिरस्य मतानां स्वटीकाभिरभिव्यक्तीकृतस्तथैव पृथूदकस्वामिना ब्रह्मगुप्तस्य काठिन्ययुक्तानां ग्रन्थानां स्वव्याख्याभिः सुबोधः सरलश्चविहितः । एषा-मुदयः १० दशमशताब्द्यामनुमीयते ।

**श्रीपतिः**—इमे महाशयाः स्वकालस्याद्वितीयाः ज्योतिर्विद आसन् । एषां मुख्य-ग्रन्थाः सन्ति—( १ ) गणिततिलकः, ( २ ) बीजगणितम्, ( ३ ) धीकोटिकरणम्, ( ४ ) सिद्धान्तशेखरः, ( ५ ) ज्योतिषरत्नमाला, ( ६ ) जातकपद्धतिः, ( ७ ) दैवज्ञवल्लभः, ( ८ ) श्रीपतिनिबन्धः, ( ९ ) ध्रुवमानसकरणं, ( १० ) श्रीपति समुच्चयश्च । एषां पाटीगणितस्योपरि सिंहतिलकनामकस्य जैनाचार्यस्य एका 'तिलक-नाम्नी टीकाविद्यते । इमे गणितस्यैव विशेषज्ञाः नहि—आसन्, अपितु ग्रहवेधक्रिययाऽपि परिचिता आसन् । एतेषां प्रधानग्रन्थः सिद्धान्तशेखरः वेधक्रियया ग्रहगणितस्य वस्तु-स्थितिं ज्ञात्वा लिखितोऽस्ति । एषां कालः प्रमाणैः प्रमाणितः एकादशशतकस्य मध्य-कालः स्थिरीभवति ।

**शतानन्दः**—एषां ग्रन्थः 'भास्वतीकरणं' वराहमिहिरस्य सूर्यसिद्धान्तस्याधारे १०९९ ईशवीये वत्सरे लिखित आसीत् । ग्रन्थोऽयमतीवसुप्रसिद्ध आसीत् । अत-एवास्यानेकाष्टीकाः संस्कृते हिन्दीभाषायाञ्चोपलब्धाः भवन्ति । अस्मिन् ग्रन्थेऽष्टा-वधिकाराः अध्यायाः वा सन्ति, येषु ग्रहाणां गतेः वर्णनातिरिक्तं सूर्यग्रहणयोश्च वर्णनं पृथगध्यायेषु कृतमस्ति ।

**भास्कराचार्यः द्वितीयः**—'यथा नाम तथा गुणः' इति नियमानुसारेण भास्करा-चार्यद्वितीयाः वस्तुतः ज्योतिर्गगनस्य भास्करा एव आसन् । वराहमिहिरस्य ब्रह्मगुप्तस्य चानन्तरमेतेषां समानकोटिकाः प्रतिभाशालिनः सकलगुणसम्पन्नाश्च अन्यः कोऽपि ज्योतिर्विद्—नाभूत् । नात्र सन्देहलेशोऽपि ज्योतिर्विदां मण्डलीषु । एतेषां जनिः सह्याद्रिपर्वतस्य समीपे विज्जववीडग्रामेऽभूत् । एतेषां पितुर्नाम महेश्वर आसीत् । 'अशिक्षितास्त्रं पितुरेव मन्त्रवत्' इति दिशा एतैः पितुः सकाशादेव ज्योतिर्विद्यामाशि-शिक्षत् । एषां जन्मकालः १११४ ईशवीये स्वीक्रिते । स्वल्पे-प्रौढे च ३६ षट्त्रिंशत्तमे वयसि—एभिः सिद्धान्तशिरोमणेः रचना कृता । तथा चोक्तं स्वयमेव गोलाध्यायस्य प्रश्नाध्याये—

रसगुणपूर्णमही-समशकनृप-समयेऽभवन्ममोत्पत्तिः ।
रसगुणवर्षेण मया सिद्धान्तशिरोमणी रचितः ॥

एतेषां विरचिताः प्रख्याताश्चत्वारो ग्रन्था सन्ति, ते चातीवलोकप्रियाः व्यवहृताश्च सन्ति । ते चेमे—( १ ) सिद्धान्तशिरोमणिः, ( २ ) लीलावती, ( ३ ) बीज-गणितम्, ( ४ ) करणकुतूहलञ्चेति ।

## भास्करोत्तरकालः

महामहनीयस्य ज्योतिर्विदो भास्करार्यस्यानन्तरं ज्योतिषशास्त्रस्यानेके विद्वांसो-

लेखकाः समभूवन् । येषां ग्रन्थेषु फलितस्य, जातकस्य, मुहूर्त्तादिविषयाणाञ्च वर्णनं मिलति । समेषां वर्णनमत्रलघुकाये वेदाङ्गेतिहासेऽसंभवत्वात्, कतिपयानामतिप्रसिद्धानामाचार्याणां तेषां ग्रन्थानाञ्च निर्देशमात्रमेवात्रोपस्थाप्यते—

( १ ) **वल्लालसेनः**—सुप्रसिद्धस्य राज्ञः लक्ष्मणसेनस्य जनकेन महाराजाधिराजेन वल्लालसेनेन ११६८ ईशवीये वर्षे 'अद्भुतसागर' इति नाम्न्याः संहितायारेकाया बृहत्संहिताया अनुकरणं करोति । अस्मिन् ग्रन्थे एकाधिकानां प्राचीनाचार्याणां ग्रन्थानाञ्चोद्धरणानि सन्ति । इत्येव नहि बहुविधानां विलक्षणातिघटितघटनानामुल्लेखोऽपि वर्तते ।

( २ ) केशवार्कस्य 'विवाहवृन्दावनम्' (१३शतके रचितम्) तद् विवाहोपयुक्तानां मुहूर्तानां परिचयं प्रददाति ।

( ३ ) **ज्योतिर्विदाभरणम्**—इति नामकः मुहूर्तग्रन्थः केनापि कालिदासेन विरचित इति कथ्यते ।

( ४ ) महेन्द्रसूरेः 'यन्त्रराजः' यन्त्राणां परिज्ञानाय प्रामाणिको ग्रन्थो विद्यते—( रचनाकालः १२९२ शकः ) ।

( ५ ) **मकरन्दः**—एभिर्ज्योतिविद्भिः १४७८ ईशवीये सूर्यसिद्धान्तस्यानुसारेण तिथ्यादीनां विशिष्टज्ञानाय स्वस्यैव नाम्न्यैका सारणी काश्यां विरचिता । यां सारणीमाधृत्याधुनापि काश्यां मिथिलायाञ्च पञ्चाङ्गानि निर्मीयन्ते ।

( ६ ) **गणेश-दैवज्ञः**—एषां प्रमुखो ग्रन्थः 'ग्रहलाघवो'ऽस्ति, योऽद्यत्वेऽतीव प्रसिद्धः । अस्योपरि विभिन्नाष्टीकाः प्राप्यन्ते । एषां जनकः केशवस्तस्मादपि महान्तआचार्याः संशोधकाश्चासन् । सूर्यस्य, चन्द्रमसः ताराग्रहाणाञ्च वेधं कृत्वा गणना प्रस्तुतीकरणे एषां दृढं मतमस्ति । केशवस्य अपरो ग्रन्थः 'ग्रहकौतुको'ऽस्ति, यस्यारम्भः १४९६ ईशवीये वत्सरेऽभूत् ।

( ७ ) **नीलकण्ठः**—अस्य 'ताजिकनीलकण्ठी' नामको ग्रन्थोऽतीव सुप्रसिद्धो विद्यते । वर्षफलरचनार्थं अस्य ग्रन्थस्य ज्योतिर्वित्सु महतीप्रतिष्ठा विद्यते । इमे अकबरस्य राजसभायां सभापण्डिता आसन् । एतेषामेवानुजानां 'रामदैवज्ञ' महोदयानां 'मुहूर्त्तचिन्तामणि' ( रचनाशकः—१५२२ ) नामकोऽतीव प्रसिद्धो ग्रन्थो विद्यते । एष ग्रन्थः मुहूर्तनिर्णयाय सर्वाधिको लोकप्रियः । अस्य ग्रन्थस्योपरि अस्य भ्रातुष्पुत्रेण गोविन्देन पीयूषधारा नाम्नी महत्त्वपूर्णा टीका विलिखिता ।

( ८ ) **कमलाकरः**—इमे महान्तः ज्योतिर्विदः युगप्रतिनिभूता अग्रगण्यगणका आसन् । एषां जनिः १६०८ ईशवीयस्य कस्मिन्नपि समयेऽभूदिति । इमे च 'न्यूटन' समकालीनाः सन्तीति । एषां महत्त्वपूर्णः सिद्धान्तग्रन्थोऽस्ति--सिद्धान्ततत्त्वविवेकः । ग्रन्थाऽयमेतैः काश्यां १६५८ ईशवीये वत्सरे प्रचलितसूर्यसिद्धान्तानुसारं विलिखितम् । अत्रैतद् वैशिष्टयं विद्यते यत् भारतीये ज्योतिषशास्त्रे क्वचिदपि ध्रुवतारायाः गतेर्वर्णनं नास्ति, परञ्चेमेतान्तारां गतिशीलां मन्यन्तेस्म । या च वर्तंकानकालस्य वैज्ञानिक्या गणनया प्रमाणिता भवति । अंकगणितस्य, रेखागणितस्य, क्षेत्रमितेः ज्यासाधनस्य च रीतयः नवीनाः इव प्रतीयन्ते ।

## आधुनिककालः

### ( कतिपयसुप्रसिद्धज्यौतिषाचार्याणां संक्षिप्तः परिचयः )

( १ ) **बापूदेवशास्त्री**—इमे महानुभावाः काशीस्थराजकीयसंस्कृतमहाविद्यालय-( क्वीन्सकालेज )स्य प्रधानज्योतिषाचार्याः गणिताचार्याः च आसन्। एतन्निर्मिताः संस्कृत-हिन्दीभाषयोः अनेके ग्रन्थाः सन्ति। रेखागणित-त्रिकोणमिति-गायनवाद-तत्त्वविवेकपरीक्षा-अंकगणितादयश्च संस्कृतग्रन्थाः प्रकाशिताः सन्ति। हिन्दीभाषायामेतैः अंकगणित-बीजगणितयोः रचना कृता। अपरञ्च—सिद्धान्तशिरोमणेः गोलाध्यायस्य सूर्यसिद्धान्तस्य चांग्लानुवादः विल्सनस्य सहयोगेन ( १८६१–६२ ईशवीये वर्षे ) कृतः।

( २ ) **केरो लक्ष्मण छत्रे**—एभिः 'ग्रहसाधनकाण्टक' नामको ग्रन्थो मराठी-भाषायाम् कांसीसी-आंग्ल-ज्योतिषग्रन्थानाञ्चाधारमाधृत्य लिखितः। अन्यच्च—नाविक-पञ्चाङ्गस्यानुसारमेतैः पञ्चाङ्गमपि प्रकाशितम्।

( ३ ) **चन्द्रशेखरसिंह-सामन्तः**—इमे उत्कलस्य निवासिन आसन्। स्वनिर्मितानां यन्त्राणां साहाय्येनैभिः सूर्यस्य चन्द्रमसः ग्रहाणाञ्च मूलाङ्कानां संशोधनं विहायातिशयोपयुक्तमेकं पुस्तकं लिखितं, यस्य नाम सिद्धान्तदर्पणमस्ति।

( ४ ) **शंकरबालकृष्णदीक्षितः**—इमे महानुभावाः पुण्यपत्तनस्य ( पूना ) महान्तः ज्योतिर्विद आसन्। एषां सर्वतोधिकोपयुक्तोविद्वत्तापूर्णश्च ग्रन्थः 'भारतीय ज्योतिष-शास्त्रा चा इतिहास' मराठीभाषायामस्ति। यस्मिन् प्रायः ६०० पृष्ठेषु वैदिक-कालादारभ्याधुनिककालपर्यन्तानां ज्योतिषस्य ज्योतिर्विदाञ्चेतिहासः महद्विवेचनया सह विद्यते। न चात्रकेवलमितिहास एव क्रमबद्धरूपेणास्ति, अपि तु ज्योतिषशास्त्रस्य तथ्यानां सिद्धान्तानाञ्चापि विशदं वर्णनमस्ति। अस्य ग्रन्थस्य हिन्दीभाषायामनुवादः लक्ष्मणपुरात् हिन्दीसमित्या प्रकाशितः 'भारतीयज्योतिष' नाम्ना विख्यातश्च।

**केतकरः**—एषां महानुभावानां पूर्णं नाम—'वेङ्कटेश-बापूजी-केतकर' आसीत् इमे-प्राच्य-पाश्चात्ययोः ज्योतिषस्याद्वितीयाः मर्मज्ञाः ग्रन्थकाराश्च आसन्। एभिः संस्कृतेऽतिशयोपयोगिनां ग्रन्थानां रचना कृता। येषु ज्योतिर्गणित—केतकीग्रहगणिते च मुख्ये स्तः। प्रथमोग्रन्थः सिद्धान्तज्योतिषस्य परिचायको विद्यते, द्वितीयश्च ग्रन्थः संस्कृतश्लोकेष्ववर्वाचीनज्योतिषस्यानुसारं पञ्चाङ्गनिर्माणस्योपयोगी विद्यते। ग्रन्थश्चाऽयमर्वाचीनज्योतिषेऽद्वितीयं महत्त्वपूर्णं पुस्तकमस्ति।

( ६ ) **बालगंगाधरतिलकः**—इमे महानुभावाः न केवलं राजनीतिविदां वरिष्ठाः, भारतीयस्वतन्त्रतासंग्रामस्य प्रखरनायकाः अपितु ज्योतिषशास्त्रस्य निष्णाताः विद्वांस आसन्। एतेषां ज्योतिषविषयकः सर्वश्रेष्ठः ग्रन्थः 'ओरायन' ( आंग्लभाषा समन्वितः ) इति विद्यते। यस्मिन् वेदानां कालमीमांसा महत्प्रौढ़युक्तीनां साहाय्येन कृता विद्यते। ग्रन्थस्तथा पाण्डित्यपूर्णः, शैली च तादृशी वैज्ञानिक्यस्ति यत् अपूर्णे सहमतेऽपि मोक्ष-मूलर-सदृशाः पाश्चात्यविद्वांसोऽपि चमत्कृताः सन्तः तन्महत्त्वं स्वीकुर्वन्ति स्म। एषां कालः १८५६–१९२१ ईशवीयो विद्यते।

(७) **म० म० सुधाकर द्विवेदी**—वाराणसेयाः महामहोपाध्यायाः पण्डितवरेण्याः सुधाकरद्विवेदिनोऽतीव प्रतिभाशालिनो ज्योतिर्विदः गणितज्ञाश्चासन्। किम्बहुना—समस्ते उत्तरभारते ज्योतिषस्य गणितस्य च प्रचार-प्रसारयोः श्रेयस्त्वमेतेषां शिष्यान् विद्यते। अपरञ्चैतैः प्राचीनज्योतिषग्रन्थान् परिशोध्य नवीनाष्टीका लिखिताः अर्वाचीनोच्चगणिते चापि स्वतन्त्राः ग्रन्थाः लिखिताः। एषामधिकांशग्रन्थाः संस्कृते सन्ति, येषु दीर्घवृत्तलक्षणम्, विचित्रप्रश्नः, वास्तव-चन्द्र-शृङ्गोन्नतिसाधनम्, द्युत्तरचारः, पिण्डप्रभाकरः, भाभ्रमरेखानिरूपणम्, धाराभ्रमः, ग्रहणकरणम्, गोलीयरेखागणितम्, यूक्लिडस्य षष्ठ-एकादश-द्वादश संख्यकपुस्तकानां संस्कृते श्लोकबद्धानुवादः, गणकतरङ्गिणी—मुख्याः सन्ति। एतदतिरिक्तं यन्त्रराजे, लीलावत्यां, बीजगणिते, करणकुतूहले, पञ्चसिद्धान्तिकायां सूर्यसिद्धान्ते, ब्राह्मस्फुटसिद्धान्ते, महासिद्धान्ते, याजुषे–आर्चज्योतिषे ग्रहलाघवे च भवद्भिष्टीका विरचिताः। आसां टीकानामतिरिक्तं हिन्दी भाषायां चलनकलन, चलराशिकलन, समीकरण चादि विविध पुस्तकानां रचना—एभिः कृता। एषां प्रखर पाण्डित्यस्य चर्चा देशे एव किमु विदेशेष्वपि भवति।

## केचनान्ये ज्योतिर्विदः

एतदतिरिक्ता अनेके ज्योतिर्विदः एवं समभूवन्, येषां योगदानं ज्योतिषशास्त्रस्य विकासाय, प्रचाराय, प्रसाराय चाविस्मरणीयमभूत्। अपि च येषां सुयोग्याश्छात्राः अद्यापि भारतवर्षे यत्र तत्र व्यापृताः सन्ति–तेषु केचन विद्वांसो यथा—महामहोपाध्यायः पं० मुरलीधरठक्कुरः, ज्योतिर्वित् पं० मुरलीधरझा, पं० पद्माकर द्विवेदी, पं० उमाकान्तझा (सन्नपुरस्थः) पं० सीतारामझा, पं० गेनालाल चौधरी, पं० चन्द्रशेखरझा, पं० अवधबिहारी त्रिपाठी, पं० हृषीकेशोपाध्यायः, पं० अच्युतानन्दझा, पं० मुरलीधर चतुर्वेदी, पं० कपिलेश्वरशर्मा, पं० गणेशदत्तः, पं० दैवरामझा, पं० गङ्गाधर मिश्रः, पं० केदारदत्त जोशी, पं० देवचन्द्रझा, पं० लोकमणिदाहालः, पं० पुलकितझा, पं० उमाकान्तझा, (वैद्यनाथ धाम) पं० रामजन्ममिश्रः, पं० रामचन्द्रझा, पं० रामचन्द्रपाण्डेयः, पं० कमलाकान्तझा, प० रामदेवझा प्रभृतयः। एष्वधिकांशा ज्योतिर्विदः दिवङ्गताः सन्ति, किन्तु तेषां कीर्तिकौमुद्यद्यापि प्रकाशमाना विद्यते। शेषाः नवीनाश्च ज्योतिषशास्त्रस्य विकासाय संलग्नाः सन्ति।

अग्नि-बाण-वियन्नेत्रे (२०५३) वैक्रमे माधवेऽसिते।
वेदाङ्गस्येतिहासोऽयं पूर्णोऽभूच्छात्रहेतवे ॥
नानाग्रन्थान् समुदधृत्य मतान्यालोच्य धीमताम्।
शाण्डिल्येन नरेशेन स्थापितो बुधसंसदि ॥

**इति मिथिलान्तर्गता सीतामढ़ी (दरभंगा) मण्डलान्तःपाति-चकौती ग्रामवासिना आदर्शरानी चन्द्रावती श्यामा-महाविद्यालयस्य प्रधानाचार्यचरेण श्रीरामेश्वरात्मजेन डॉ० नरेशझाशर्मणा प्रणीतो वेदाङ्गेतिहासः समाप्तः।**

---